**१३. वादे वाक्योपन्यासस्थलम् :** निर्णीते तु वादविषये प्रमाणवाक्योपन्यास उभयवादिसम्मतः समञ्जसः स्यात् । यद्यपि विज्ञाते तत्त्वे शास्त्रोपदेशो व्यर्थ एव कृत्याभावात् । अविज्ञाते च तस्मिन् पूर्वोक्तमुद्रया निष्फलस्तदुपन्यास इत्युभयथापि शास्त्रवाक्योपन्यासो निरवकाश इव । तथापि वादान्ते तदुपन्यासेन प्रतिवादिनाहं जित इत्याकारकोद्वेगस्य वादिनि परिहारः प्रयोजनं भविष्यति। 'यस्मान्नायं पक्षः प्रतिवादिकपोलकल्पितः, कस्तर्हि श्रुत्यनुगृहीतोऽभियुक्तैः पूर्वतरैश्च परिगृहीत एव। अतो नास्त्युद्वेगकारणम्' इति मनःसमाधानं समुपजायते[1] । अपि च वादमध्येऽपि न सर्वथा शास्त्रबहिष्कारः । शास्त्रसम्मतत्वेनाभिमतमार्गेणैव हि तर्क्यत उभाभ्यामपि । यदा तु शास्त्रवाक्यमभिज्ञवाक्यं[2] वा गृह्यते विचारमध्ये, तदा प्रतिवादी तद्वाक्यविषयस्य प्रमाणोपनीतत्वं मूलप्रामाण्यादेवाङ्गीकरोतु मा नाम वा[3], न तन्मात्रेण तेन किञ्चिदपराद्धमिति युज्यते मन्तुमित्येतावदिहोच्यते । यद्यदुपन्यस्यते वादिना भवतु तदाप्तवाक्यस्थमन्यदेव वा, तस्य सर्वस्याप्यर्थस्य सोपपत्तिकत्वमाक्षेप्तु स्वतन्त्रेण भवितव्यं प्रतिवादिना । अन्यथा हि प्रमाणकारणवियुक्तमपि यत्किञ्चिदुपन्यस्य सर्वः सर्वमपि समर्थयितुं शक्नुयादेवेति वादव्यवस्थापरिप्लव एव प्रसज्येतेति। तस्माद्वादिनोर्मध्ये यस्तर्कमनुभवानुसारिणमप्यनादृत्य, ईश्वर-

१. आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवत्यव्यभिचारादिति ॥
—बृ० भा०

२. सोऽयं न्याय्योऽपि वेदान्तार्थः शास्त्राचार्यप्रसादलभ्योऽप्यनपेक्षितशास्त्राचार्यप्रसादोऽनन्यापेक्षसिद्धस्वभावत्वात् ॥ —नै०

३ न च वेदोक्तितो वेद श्रद्धेयार्थ इहोच्यते ।
कित्वमानत्वहेतूनां वेदवाक्येष्वसम्भवात् ॥ —वा०

शासनश्रुत्याप्तवाक्ययोगमहिममन्त्ररहस्यादिकमुपन्यस्य तद्बलादेव स्वपक्षं सबलं मन्यते, तस्य दर्शनं कुदर्शनमिति ज्ञेयम् ॥

१४. **शब्दप्रामाण्यम्** : नन्वेव शास्त्रस्यानुवादकत्वादप्रामाण्यापत्तिः । तथाप्तवाक्यानामपि । अनधिगताधिगन्तृ हि प्रमाणं भवति । तत्र यदि तत्त्वार्थो निर्णीत एव तर्कतः प्राक्, कथमनन्तरं व्य्रियमाणमश्नुवीत वाक्य स्वातन्त्र्येण प्रामाण्यमिति? अश्नुत एवेति ब्रूम', श्रुत्यनुगृहीतत्वात्तर्कस्य । यो हि तत्त्वनिर्णायकस्तर्कः सोऽपि श्रुत्यनुगृहीत एवेति नानुवादकत्वं श्रुतेर्भवति तर्कापेक्षया । अत एव हि तात्पर्यलिङ्गेषूपपत्तिमपि पेठु' पूर्वाचार्यः । भगवत्पादैश्चाभाषि— **श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयत** । इति । वार्तिककारैश्चानुकीर्तितम्— **अन्वयव्यतिरेकपुरस्सरं वाक्यमेवावाक्यार्थरूपमात्मानं प्रतिपादयतीति** । तस्मात्तर्कस्यापि श्रुत्युपजीवकत्वान्नास्त्यप्रामाण्य श्रुते. । अपि च मृषैवेदं वचनं युक्त्युररीकरणे शास्त्रस्याप्राण्यमापतेदिति । यस्मात्तर्कपरिशुद्धमेव प्रमाण नाम भवति । यदाहुस्तर्कविदो न्यायभाष्यकारा.— **तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणानुग्रहोऽद्भावितात् प्रसन्नादनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत** । इति . एवमविशेषेण सर्वप्रमाणानामपि शेषभूतत्वात्तर्कस्य[1] न तदपेक्षामात्रेणाप्रमाण्यं शङ्कितु युज्यते । न हि तर्कोपि[2] प्रमाणं येनानुवादकत्वं प्रसज्येत तद्युक्तस्य शब्दस्य । सर्वत्र चाप्रमाणत्वे कारणमबोधनं संशयित बोधनं विपरीतबोधन वा न पुनर्युक्त्युपेतत्वमपि । तस्माद्युक्तिमत्त्वं नाम

१. सर्वप्रमाणशेषत्वं युक्तीनामुपवर्णितम् ।
शास्त्रान्तरेष्वपि तथा नात स्वातन्त्र्यखण्डनम् ॥ —वा०

२. न चागमस्य स्वातन्त्र्यं युक्त्युक्तेरपनुद्यते ।
अर्थान्तरत्वं युक्तीनां प्रमाणेभ्यो यतस्तत ॥ —वा०

शास्त्रस्य न दूषणम्, अपि तु भूषणमेवेति प्रत्येतव्यम्। तदेव श्रुते स्वविषये प्रामाण्यमप्रतिहतं तर्कापेक्षया। अनुमानप्रमाणविषये तु नास्त्येवावसरः शङ्कायाः तदविषयत्वादागमार्थस्य। तस्मान्न शब्दस्याप्रामाण्य तर्कापेक्षया। यत्पुनरनुभवसापेक्षत्वं, न तेनाप्रामाण्यमीषदपि शक्यशङ्कम्। यतः सर्वेषामपि प्रमाणानामिदमेव प्रमाणत्व[1] नाम यद्यथार्थानुभवकरणत्वम्। न ह्यनुभवानारूढमर्थ तद्विरुद्ध वा बोधयच्छास्त्रमाचार्यो वा प्रमाणं भवेदत्र विषये, अनुभवावसानत्वाच्छास्त्राचार्योपदेशानामिति। यदाहुः— **आगमाद्दर्शनं पूर्वमागमाचार्यतो मतिः। त्रयाणामपि सङ्गानाच्छास्त्राचार्यात्मनां स्थिरम्॥** (वा०)इति। स्मृतिश्चात्र भवति— **न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः। हेत्वागमसदाचारैर्यदुक्तं तदुपास्यताम्॥** (मो०) इति। **उक्तलक्षणमात्मानमुक्तलक्षणमीश्वरम्। एकं पश्यन्ति ये विप्रास्तर्कतश्च प्रमाणतः॥ तथा स्वानुभवेनैव गुरूक्त्या च प्रमाणतः। त एव ज्ञानसम्पन्नास्त्रिवःशपथयाम्यहम्॥** (सू० सं० य०) इति च। तस्मान्नेदं शङ्कनीयं शास्त्रस्याप्रामाण्यमापतेद्यदि तर्कोऽनुभवो वा तेनापेक्ष्येतेति॥

१५. **वाक्यविचारोपसंहारः** : तस्माद्वादे तर्क एवादेयः प्रथमतः, वाक्योपन्यासश्च पश्चात्। तर्क विना शपथमात्रेण न कश्चित् पक्षः साध्यते बाध्यते वेत्यतः प्रथितयशसामपि तीर्थदृशां, पवित्रतमानमपि ग्रन्थानां वा नामग्रहणमात्रेण प्रतिवादिवाक्स्तम्भनप्रयतनं स्वपक्षस्य युक्त्यनुभवबाह्यताप्रकटनमेवेति सिद्धम्। इत्थ सामान्यतो दर्शितः समयबन्धप्रकार कथायां वाक्यानयनविषये। अनयैव दिशा

१ प्रमाणव्यवस्थायाश्चानुभवमात्राश्रयत्वात्॥ —नै०
आत्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम्॥ —सू० भा०

विचारं प्रवर्तयामोऽग्रेतनग्रन्थसन्दर्भेण । न वय प्रमाणेयत्तासङ्कोचे शब्दप्रामाण्यानादरजनने वा बद्धादराः, किं तु वाक्यबलात्समीचीनानुभवसिद्धमपि नातिशङ्कनीयमित्येव विज्ञापयाम इति बोध्यं सुधीभि ॥

**वाक्यमित्येव यद्वाक्यं समुदाह्रियते बलात् ।**
**न तत् प्रमाणं स्वीकार्यं शक्रेणाप्यभ्युदीरितम् ॥**

**संशीत्यबोधविधुरं विपरीतबोध-**
**शङ्काकलङ्करहितं विमलं सदर्थम् ।**
**पूर्णानुभूतिकलितप्रबलोपपत्ति-**
**पूतं यतोऽभिदधते निगमाः प्रमाणम् ॥**

इति श्रीमत्पूज्यपाद शङ्करभगवच्चरणस्मरणपरिचयाप्तवेदान्तप्रवेशेन

**सुब्रह्मण्येन विरचिते**

**श्रीमति शङ्करहृदये मूलाविद्यानिरासे**

**विषयावतरणं नाम**

**प्रथम खण्ड**

—:—

# द्वितीयः खण्डः

(एकीयमतसमालोचनम्)



## एकदेशिपक्षे परमार्थसत्ताया असिद्धिः

१६. **परमार्थसत्तानिरुक्तेरावश्यकता :** वेदान्तप्रतिपाद्यनिष्प्रपञ्चात्मविषये जिज्ञासुजनसंशयानुपन्यस्य तत्र सिद्धान्तैकदेशीयानां समाधान प्रदर्शितम् । अनयोश्च शङ्कासमाधानयो सारासारनिर्धारणार्थं तत्त्वावधारणार्थं च ग्रन्थारम्भ इत्युक्तं पूर्वस्मिन् खण्डे । तत्रैकीयपक्षे परीक्ष्यमाणे सर्वन्यायविरोधित्वादनेकधा तत्र दोषा लक्ष्यन्ते । तान् क्रमशो दर्शयिष्यामः । प्रथम तावत् परमार्थसत्ताया असिद्धिर्व्यक्तीक्रियते । अत्रेदं वक्तव्यम्— कथ स्वप्नजागरयोर्विलक्षणत्वं पूर्वपक्षिणोक्त प्रतिक्षिप्तमिति । नैतत्प्रतिवक्तव्यम्, यतः स्वप्नस्य प्रातिभासिकत्वं जागृतेश्च व्यावहारिकत्वमिष्यतेऽस्माभिः । अतो वैलक्षण्येऽपि तयोर्न पारमार्थिकत्वमभ्युपेयत इत्यदोष इति चेत् । न, परमार्थस्यानिरुक्तेः । अयमेव परामार्थ इति निरुच्य हि जाग्रदाद्यवस्थाना तद्वैधर्म्य शक्य परिज्ञातुम् । न च तन्निर्वचनमस्ति भवताम् ॥

१७. **संसारस्याविद्यकत्वाभ्युपगमेन परिहारे परस्पराश्रयः :** अथ स्यात् - संसारस्यानाद्यविद्याकृतत्वात्तस्याश्च विद्यया प्रहाणसम्भवात् तत एव संसारमिथ्यात्वावगमे, आसंसारविमोक्षात्

प्रतीयमानं जगद्व्यावहारिकमित्येव पर्यवस्यति । स्वप्नाश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्येतावान्विशेषोऽभ्युपगम्यत एवास्माभिस्ततो न विरोध इति । न, संसारस्याविद्याकृतत्वसिद्धौ विद्याविनाश्यत्वसिद्धि-स्तत्सिद्धावेव चाविद्याकृतत्वसिद्धिरिति सिद्ध्योः परस्परमुखनिरीक्षण-प्रसक्तेः ॥

**१८. विद्वदनुभवप्रामाण्यादपि नाविद्यकत्वं संसारस्य :** नैषा प्रसक्तिरस्ति, विद्वदनुभवप्रामाण्यादिति चेत् । तथा ह्यभियुक्ता विद्वांसो मिथ्याभूतमेव प्रपञ्चं प्रतिजानते, ये जीवन्मुक्ता इति प्रख्याताः । तस्मादयुक्तमिदं परस्पराश्रयत्वप्रसञ्जनमिति चेत् । न, वादि-परिकल्पितानुभवमात्राद्वस्तुसिद्ध्यभ्युपगमे सर्वसिद्धान्तानामप्यभीष्टसि-द्धिप्रसङ्गात् । न हि जीवन्मुक्तानुभवं सर्वेऽपि वादिनोऽनुमन्यन्ते । न चेदं परमार्थसत्तास्वरूपमभियुक्तवचनैकगम्यम् । अपि च जीवन्मुक्ता कस्यामवस्थायामेतत् सङ्गिरन्ते? न तावज्जाग्रदाद्यन्यतमायाम्, अभ्युप-गमविरोधात् । जाग्रदादिसर्वसंसारदोषविनिर्मुक्ता हि जीवन्मुक्ता अभ्यु-पगम्यन्ते युष्माभिः । अभ्युपगम्य तथा चेदिदानीं पुनरुच्यते जाग्र-दाद्यन्यतमावस्थायां जीवन्मुक्ता संसारदोषमुपदिशन्तीति, तदा कथं न व्याघातः? तस्माज्जीवन्मुक्ता नार्हन्ति संसारदोषं स्वयं द्रष्टुं प्रागेवोपदेष्टुं परान् जाग्रदाद्यन्यतमावस्थायाम् । किं चान्यत्-- जीवन्मुक्तानां जागरिते तत्त्वमुपदेष्टुमीहमानानां सुषुप्तावन्यावस्थायां वा स्यात् प्रपञ्चमिथ्यात्वाव-गमः? न तावत् सुषुप्तौ, को हि स्याद्विशेषः[1] सुषुप्स्योरज्ञात्मज्ञा-

१. समानं हि सर्वप्राणिनां पर्यायेण जाग्रत्स्वप्नसुषुप्तिगमनम् —प्र० भा०
सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रति-पिपादयिषितवस्तुप्रतिपादनानुगुण्येन न तु विदुषो विशेषवन्तो विधित्स्यन्ते ॥ —सू० भा०

भ्यामनुभूयमानयोर्येनाविद्वत्सुषुप्तावेव विद्यते कारणाविद्या, विदुषां पुनः सुषुप्तौ बाध्यत इत्युक्तिर्युक्त्युपेता स्यात्? क्वचित्किञ्चिदपि चेद्विशेष उररीक्रियेत, तत एव सुषुप्तेः सुषुप्तित्वमुच्छिद्येत । निर्विशेषत्वमेव हि सुषुप्तेरवस्थान्तरव्यावृत्तो धर्म इति प्रतीयते । अथ नाङ्गीक्रियते भेदः सुषुप्त्योरनयोः, तदा ज्ञानिसुषुप्तावपि ध्रुवमायास्यत्यविद्येति गतं सुषुप्तौ जीवन्मुक्तानामज्ञानमपबाध्यत इति कथया । तस्मादेतद्दोषद्वयं परिजिहीर्षुणा वक्तव्यं भवति यदवस्थान्तर एव तदज्ञानं ध्वस्यत इति । न चास्ति काचित्तादृश्यवस्था प्रसिद्धा । ऊरीकृत्यापि तादृशीमवस्थां नेष्टं सिध्यति, यतो लौकिकैस्सावस्था नानुभूतचरा । तस्मान्न शक्नुवन्त्येतानविद्यावतः प्रतिबोधयितुं ज्ञानिनस्तदानीमिति ॥

१९. **तुरीयावस्थानुभवादपि न तथा :** ननु जाग्रदादिभिन्नाया तुरीयायामनुभवन्तु प्रपञ्चमिथ्यात्वम्, जागरे च प्रतिबोधयन्त्वस्मान् । अस्मिन् पक्षे को दोषः? अयमेव दोषो यज्जागरमनुभवन्त एव तन्मिथ्यात्वमुदाहरन्ति । न हि स्वानुभवविरुद्धमप्युपदिशन्तः परीक्षका निर्दुष्टप्रमाणपदवीं निर्देष्टुं पारयन्ति ॥

२०. **विदुषां अविद्यालेशसद्भावाज्जागरितादिप्रपञ्चप्रतिभासो युज्यत इति शङ्काया निरासः :** ननु च जीवन्मुक्तानां निस्संशयमात्मतत्त्वावबोधे जातेऽपि मात्रयाऽविद्यासंस्कारोनुवर्तते । ततश्चोपपद्यते सांसारिकप्रत्ययतद्व्यवहाराणामप्यनुवृत्तिः । तान्मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते, तस्मान्नोक्तदोषः । नैतद्युक्तमिव । आत्मनः संसारित्वं यदि विद्वस्यमानो व्यवहरंश्च संसारिवदेव ज्ञान्यपि सन्, तदा कस्मान्न श्रद्धत्ते तत्सत्यत्वमपीति प्रष्टव्योऽसि । अविद्यासंस्कारानु-

वृत्तिरेव केवलं कारण व्यवहारे, विद्यया तु तन्मिथ्यात्वावगम इति चेत्। अनिवृत्तायामविद्यायां कथं विद्वानिति?

२१. **जीवन्मुक्तेर्गौणत्वस्वीकारेऽपि न दोषान्निस्तारः :** अथोच्येत — नाविद्यया निःशेषविलयः संसारमिथ्यात्वावगमेऽपेक्ष्यते, कस्तर्हि, प्रारब्धकर्मोपादानभूताविद्याव्यतिरिक्ताविद्याविलयः। स च जीवन्मुक्तस्य संवृत्त इति सांसारिकप्रत्ययव्यवहारोभयानुवृत्तिस्तन्मिथ्यात्वानुसन्धानं च न विरुध्येते। अत एव साम्प्रदायिकाः — विदेहकालीन एव मुख्यो मोक्षः, स्थूलसूक्ष्मोभयरूपाया अप्यविद्यायास्तदानीमेव निःशेषं ध्वस्तेरित्याहुः। जीवन्मुक्ते तु तनूकृता संस्कारापराभिधाना जाग्रदादिप्रतिभासप्रयोजिका काचिदविद्या वर्तते। तस्य चाविद्यालेशस्य तत्त्वानुसन्धानादेव प्रक्षयो भवतीति न शरीरपातोत्तरमपि कैवल्यानाप्तिप्रसङ्ग इति। अत्राप्यनुपपत्तिस्तदवस्थैव। कथम्? विद्याविद्ययोरेकाधिकरणत्वयोगात्[1]। न हि विरुद्धस्वभावयोस्तमःप्रकाशयोरिव युज्यत एकत्र समावेशः॥

कथ न युज्यते? दृश्यते ह्यल्पदीपप्रदेशे तमसोऽपीषदनुवृत्तिः, छायायामप्यातपोऽनुमानगम्यतारतम्येनोपलभ्यमानौष्ण्यलिङ्गात्। मैवम्। प्रकाशाभावस्य तमसः प्रकाशस्थले दर्शयितुमशक्यत्वात्। ननु चोपचयापचयाद्यवस्थाभेदविशिष्टं रूपवत्तया चोपलभ्यमानं तमः कथमभावतामालम्बेत? न च रूपवद्द्रव्यस्य स्पर्शवत्त्वनियमात्तमो न रूपिद्रव्यं भवितुं युक्तमिति शङ्क्यम्। रूपरहितस्य वायोः स्पर्शो यथाभ्युपगम्यते, तथा स्पर्शहीनस्यापि तमसो रूपवत्त्वं किं न स्यात्?

१ सम्यग्ज्ञानं यदाश्रित्य तन्मोहोऽपि तदाश्रय।
अबाधितं तमोऽत्रास्ते इत्युक्तिर्जडवक्तृता॥ —वा०

न हि दृष्टेऽप्यनुपपत्तिः। अपि च सवितृकिरणव्याप्ते देशे यदा दीपप्रकाशजन्मविनाशौ स्याताम्, तदा दीपप्रकाशस्याभावेषु प्रागभावप्रध्वसाभावेतरेतराभावरूपेषु न विद्यते तमस्त्वव्यवहारः। अथ स्यात्—सकलप्रकाशाभाव एव तम इति, तर्हि सर्वप्रकाशसन्निधानं विना तमो न कदापि निवर्तेत। न चैतदस्ति। तस्मान्न प्रकाशाभाव एव तम इति युक्तमुत्पश्याम इति ॥

तदेतदनुभवापलापिनां वचनम्। प्रकाशसामान्यस्य ह्यभावस्तम इत्युक्तमस्माभिः। तत्र यत्र कुत्रचिद्यस्य कस्यचिदपि प्रकाशस्य सन्निधाने सति तत्र तमसोऽनुपलभ्यमानत्वात्केन तर्केण सिध्येद्भावत्वं तमसः? तदेवं मन्दप्रकाशानुवृत्तिर्यत्रास्ति तत्रैव तमोऽनुवृत्तिः प्रक्षालितेक्षणैरपि न शक्यते साक्षात्कर्तुमिति कुतः सहावस्थानसङ्कथा? न चेदमाशङ्कनीयम्— यत्र घटोऽस्ति तत्रैवाधिकरणे यस्य वस्तुनो व्याप्त्यसम्भवस्तस्याप्यनेन न्यायेन घटाभावत्व भावत्वव्यावृत्तिश्च प्रसज्येयातामिति। यत्र प्रकाशसामान्यादर्शनं तत्र नियमेन तमसो दर्शनं यथा, तथोक्तदृष्टान्ते घटसामान्याभावस्थले तादृशवस्त्वप्रतीतेः। तस्मात्प्रकाशाभाव एव तमः ॥

ननु तमस आलोकविरोधित्वादालोकाभावव्यञ्जनीयत्वम्, अतो युज्यत इदं यत्प्रकाशसामान्यस्याभाव एव तमो दृश्यत इति। तदिदमति तुच्छम्। अभावस्य सविशेषत्वे प्रमाणाभावात्। अभावस्याभावान्तरव्यङ्ग्यतावाचोयुक्तेरविद्यमाननगरे बन्ध्यापुत्राभिषेकवचनसमानयोगक्षेमत्वात्। न हि तमसो भावत्वमद्यापि सिद्धम्। अभावस्य व्यञ्जकत्वं वा। कश्चायं तम आलोकयोर्विरोधो यमवलम्ब्यालोकाभावव्यञ्जनीयता तमसः स्वीक्रियत इति। न सहानवस्थायित्वम्, वैप-

रीत्यस्वीकारात्। नापि भावाभावरूपत्वम्, तदनङ्गीकारात्। सहावस्थानाङ्गीकारादेव न तदत्यन्ताभावसामानाधिकरण्यरूपोऽपि विरोधः। ननु बाध्यबाधकरूपो विरोधोऽस्ति? न तर्हि तयोर्युगपदेकत्र स्थितिः। अस्तु तर्हि परस्परतादात्म्याभावरूपो विरोध। तदपि न शुध्यति, घटपटयोरपि विरोधप्रसक्तेः। ननु तादात्म्यं नाम जातिव्यक्त्योरिव परस्परसम्भेद। तद्वदिह परस्परसम्भेदो न सम्भवतीति युज्यत एव विरोध। न च घटपटयोरपि तत्प्रसक्तिरिति शङ्कनीयम्। इष्टस्यैवापादनात्। इष्टमेवेदं नो यद्धटपटयो परस्परतादात्म्य न सम्भवतीति। मैवम्। जातिव्यक्त्योर्भेदे मानाभावात् तन्निरूपणाधीननिरूपणवतस्तादात्म्यस्य दूरतोपास्तत्वात्। एकमेव हि वस्तु[1] द्रव्यगुणक्रियाजातिव्यक्त्यादिरूपेण बहुधा विकल्प्यत इति स्थितिः। तदेवं नास्ति युष्माकं तमःप्रकाशयोर्विरोधसिद्धिः। तस्मान्न युज्यत आलोकविरोधित्वादालोकाभावव्यञ्जनीयत्वमिति। अत एवालोकाभावव्यञ्जनीयतया तमस आलोकनिरपेक्षचक्षुर्विषयत्वमिति यदप्युच्यते तन्निरस्तम्। रूपिप्रात्यक्ष्येऽवश्यापेक्षणीयत्वादालोकस्य। नन्वेवं रूपवदभावत्वादालोकाभावस्यापि केवलचक्षुर्विषयत्व न स्यात्, घटाभाववत्। मैवम्। अभावस्य विशेषाभावात्। न चाभावस्य चक्षुर्विषयत्व सम्भवति, अभावत्वादेव ॥

तदित्थ नास्ति तमसः प्रत्यक्षता। तस्मात्तमः पश्यामीति लोकव्यवहारस्य मुख्यत्वानुपपत्तेरालोकाभाव एवायमौपचारिकः प्रयोग इति मन्तव्यम्। यत्तु प्रकाशाजन्यरूपिद्रव्यसाक्षात्कारजनकमपि भवितुमर्हति चक्षु, रूपिद्रव्यग्राहकेन्द्रियत्वात्त्वगिन्द्रियवदिति। तन्न।

१. तस्मात् द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायाना द्रव्यात्मकता व्याख्याता ॥ —सू० भा०

यथा हि रूपिद्रव्यग्राहकयोग्यत्वेऽपि त्वगिन्द्रियस्य न रूपग्राहकता, तथा न भवति चक्षुर्विषये । रूपग्रहणस्थल एव त्वालोकापेक्षेति किं केन सङ्गतम्? तस्मान्नाभावत्वमनुपपन्नं तमसः । गुणक्रियावत्त्वभ्रान्तिस्तु दर्पणगतप्रतिबिम्ब इव उपाधिकृता न विरुध्यत इत्यन्यत् ॥

अलं वा विवादेन तमसो भावत्वविषये । बाध्यबाधकभावरूपविरोधस्तु तमःप्रकाशयोः प्रत्यक्षसिद्ध इति न केनापि युगपदेकत्र सहभावः शक्यशङ्कः[१] । तथा चोपपादितमधस्तात् । तस्मान्नैष दृष्टान्तः ॥

एवं छायातपयोः शीतोष्णयोर्वा नास्त्येव सहावस्थितिः । छायायां तावदौष्ण्यदर्शने छायातपयोरेकत्र स्थितिरित्ययुक्तम्, आतपस्य संस्थानान्तरत्वात् । औष्ण्यस्य सस्थानविशेषो ह्यातपो नाम । न चास्ति छायायाः शैत्यधर्मसमवायः येन शीतोष्णयोः स्यादपि सहभावः, छायया अपि तमोवदवस्तुत्वात् । किं च शीतम्, उष्णमिति च परस्परव्यावृत्तस्वरूपवस्तुद्वयवाचकशब्दाविति वक्तुमेव न शक्यते । अपेक्षावशादेकस्यैव वस्तुन उभयवाच्यतादर्शनात् । एकापेक्षया हि यद्वस्त्वुष्णमिति तदेव वस्त्वन्तरापेक्षया शीतमिति भवति । भवतु वेदं यथा तथा । तथापि यत्र यदा बुद्धिरुष्णमिदमिति, तत्रैव तदैव नोत्पद्यते कस्यचिच्छीतमिदमिति बुद्धिः । तस्मादद्दृष्टान्तः शीतोष्णव्यवहारोऽपि[२] विरुद्धयोः सहा-

१. न हि विधिशतेनापि तमःप्रकाशयोरेकत्र सद्भावः शक्यते कर्तुं किमुत लिङ्गैः केवलैरिति ॥ —मुं० भा०

२. विद्योत्पत्तौ अविद्याया ह्यस्तत्वात्तदाश्रयेऽविद्यानुपपत्तेः । न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उपपत्तिर्नापि संशयोऽज्ञानं वा ॥ —ई० भा०

वस्थाने । तस्मादनुभवविरुद्धमिदं मिथो विरुद्धस्वभावयोर्विद्याविद्ययो-रात्मैकविषययोरेकाश्रयतोत्प्रेक्षणम्[१] ॥

२२. **अद्वैते प्रमाणाभावश्चास्मिन् पक्षे :** अपि च सर्वस्यापि प्राकृतजनस्यागामिकर्मणोऽप्रवृत्तफलत्वात्, सञ्चितस्य च समुदाचरद्वृत्तिकत्वाभावाच्च प्रारब्धफले कर्मण्येव सत्यत्वबुद्धिस्तत्फलोपभोगकाले कर्मतत्साधनतदधिष्ठानेषु मामकीनत्वबुद्धिश्चोपावर्तेते । तानि चेत् कर्मतत्साधनतदधिष्ठानानि जीवन्मुक्तस्यापि सन्ति, तदेदमवश्यमङ्गीकृतं भवति यज्जीवन्मुक्तो नाम शास्त्रश्रद्धामात्राकलितव्यवहारमिथ्यात्वो न त्वनुभूतद्वैतथ्य इति । यत्तूक्त विदेहताकालेऽस्त यात्यविद्येति, न तत्र मानमुपलभामहे । वेदान्तवचनप्रामाण्यमस्तीति चेत् । न, पारोक्ष्यप्रसङ्गाद्विद्याफलस्य । यदि हि देहपातानन्तरमेव[२] स्यादविद्यास्तमय पारोक्ष्यमेवाभिलिङ्गेत तदानीं मुक्तिः । ततश्च वेदान्तविज्ञानमपरोक्षानुभवरूपमिति[३] कथा वृथा भवेदिति । तस्मादविद्यानिवारणस्यानिरूपणात् परमार्थसत्ता न सिध्यत्येकीयपक्ष इति सुस्थम् ॥

१ दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ॥ —क०
विपरीते अन्योन्यव्यावृत्तरूपे विवेकाविवेकात्मकत्वात्तम प्रकाशाविव ॥ —क० भा०

न च विद्याविद्ये एकस्य पुरुषस्य सहभवतो विरोधात् तम प्रकाशाविव ॥ —बृ० भा०

२. न हि तत्त्वमसीत्यस्य वाक्यस्यार्थस्तत्त्वं मृतो भविष्यसीत्येव परिणेतुं शक्य ॥ —सू० भा०

३ अनुभवारूढमेव च विद्याफलं न क्रियाफलवत्कालान्तरभावीत्यसकृदवोचाम ॥ —सू० भा०

## भावाज्ञानस्वरूपासिद्धिः

**२३. जागरिते नास्ति भावाविद्यानुभवः; न जानामीति सिद्धमन्यथा :** अभ्युपगम्य भावरूपाविद्यामिदमवोचाम यत् परमार्थसत्ता प्रतिपक्षे दुरुपपादेति । न च सा सेद्धुमर्हति । कथं नार्हति? यावता त्रिसृष्वप्यवस्थासु सास्तीति प्रत्यक्षादिभिरवगमिता । नेत्युच्यते, उक्तहेतुभिस्तदसिद्धेः ॥

कथम्? यत्तावदुक्तं जाग्रदवस्थाया 'मामहं न जानामी'ति प्रत्यक्षावभासो भावाज्ञाने मानमिति । तन्न, उक्तानुभवस्यान्यथापि सिद्धेः । विद्यते हि ज्ञानाभावमिथ्याज्ञानसंशयज्ञानरूपमज्ञानत्रयम्[१] । तेषामन्यतमविषय एव किं न स्यादुक्तानुभवः? तथा हि– व्यवहारे तत्र तत्र कस्मिंश्चिद्विषये श्रुतिपथं गते सत्येवं मतिर्जायते– नाहमिदं जाने, नाहमदो जाने, किंत्वेतावदेव मया दृष्टं ज्ञातं चेति । सोऽयं ज्ञानाभावो नाम क्वचिद्विषयविषयकः तदन्यविषयकज्ञातत्वबुद्धिनिबन्धनः । तथा कदाचिदेवं मनीषा समुन्मिषति–रजतमिदमिति, सर्पोऽयमिति, तोयमिदमिति । सा च मनीषा तदुत्तरकालीनया विमर्शपूर्वकं जायमानया बुद्ध्या बाध्यते– ममैषा भ्रान्तिरुद्बभूव, न त्विदं रजतं किं तर्हि शुक्तिरेवेति, नायं सर्पः किं नाम रज्जुरेवेति, नेदं तोयमपि तु मरीचय एवेति च । तदिदं मिथ्याज्ञानं नामातस्मिंस्तद्बुद्धिरूपम् । क्वचित्पुनरनिश्चिततद्भावरूपं द्विकोटिकं ज्ञानमुत्पद्यते

१ यदि ज्ञानाभावो यदि संशयज्ञानं यदि विपरीतज्ञानमज्ञानं वोच्यतेऽज्ञानमिति सर्वं हि तज्ज्ञानेनैव निवर्त्यते ॥ —बृ० भा०

( एतद्भाष्यकृतमज्ञानशब्दार्थपरिगणनं लिङ्गमज्ञानत्रैविध्ये ॥ )

यथा—स्थाणुर्वा स्यादय पुरुषोवेति । सोऽयं सशयो नाम । वर्णित-स्वरूपत्रयस्याज्ञानानुभवस्य व्यवहारावस्थाविद्यमानयत्किंचिद्विशेष-विज्ञानसहसत्ताकस्य सस्कार सामान्यतो हेतुर्भवत्यहमज्ञ इति व्यव-हारे । तत्रैव सति न शक्यते वक्तुं 'अहमज्ञ' इति व्यवहारेण सिद्ध्यति जागरिते भावाज्ञानमिति । यत्त्वाहुर्भावाविद्यावादिन.—न जानामीत्यनुभवो न मिथ्याज्ञानविषयः, मिथ्याज्ञानस्य ज्ञानत्वाधिकर-णत्वात्; नापि ज्ञानाभावविषय., ज्ञानरूप आत्मनि तदभावस्यासम्भ-वात्, न वा संशयविषयः, 'न जानामी'ति निर्भासात् । नाप्यन्तःकर-णवृत्तिज्ञानाभावस्तद्विषयः, अभावप्रतियोगिज्ञाने तदज्ञाने च तादृशा-भावाज्ञानायोगात्, यद्विषये कदापि ज्ञान न भविष्यति तत्रापि न जानामीत्यनुभवाच्च । पारिशेष्यात् तस्यानुभवस्य भावाज्ञानमेव विषयो भविष्यतीति । तदेतदयुक्तम्, उक्तरीत्या निश्चितज्ञानसापेक्षस्य ज्ञाना-भावादित्रिकस्य तादृशानुभवविषयत्वे बाधकाभावात् । न हि पश्यामः कुत्राप्युक्तप्रत्ययत्रयं[1] मुक्त्वान्य कञ्चिदज्ञानपदार्थम् । न च 'न जाना-मी'ति निर्भासस्य संशयमिथ्याज्ञानगोचरत्वानुपपत्तिः । सम्यग्ज्ञान ह्यत्र ज्ञानशब्दार्थः । तस्मान्न जानामीति तदभाववत् तदन्यत्तद्विरुद्धं वा ज्ञानं यथासम्भवं गोचरयेत्तत्र किमपि बाधक नोपलभामहे ॥

**२४. 'त्वदुक्तं न जानामी'त्यत्र त्वदुक्तस्य प्रमाणविषयत्वे विचारः :** ननु 'त्वदुक्तं न जानामी'ति व्यवहारस्तावत् त्वदुक्तार्थ-विषयकं प्रमाणज्ञानं मम नास्ति, किं तु सशयितमेव मे ज्ञानमित्येवं

१ तामसो हि प्रत्यय आवरणात्मकत्वाविद्या, विपरीतग्राहक , संशयोपस्था-पको वा अग्रहणात्मको वा विवेकप्रकाशभावे तदभावात् । तामसे चावरणा-त्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धे. ॥ —गी० भा०

परतया नेतु न शक्यते । 'त्वदुक्तविषयकं प्रमाणज्ञान मम न विद्यत' इति यदिद ज्ञान तत्खलु प्रमाणज्ञानमेव । तद्विषयान्तर्गतत्वाच्च त्वदुक्तार्थविषयस्यापि प्रमाणानीतत्वमेवायास्यतीति कथ तत्रैव प्रमाणज्ञानाभाव सम्भवेत्? न च तस्याज्ञातत्वं बोधयत. प्रमाणज्ञानाद्व्यतिरिक्तं प्रमाणज्ञान मम नास्तीत्येवमर्थविवेचनेऽप्युक्तदोषान्निस्तारं सम्भावयामः । तादृशप्रमाणज्ञान नास्तीत्यस्यापि प्रमात्वादेवोक्तदोषपिशाचिकावेशा इति चेत् । मैवम् । 'त्वदुक्तविषयक प्रमाणज्ञान मम नास्ती'त्यस्य प्रमात्वेऽपि, त्वदुक्तविषयस्य प्रमाणविषयत्वे मानाभावात् । यद्विषये खलु कदापि ज्ञान न भविष्यति, तत्रापि न जानामीत्यनुभवो वर्तते, यथा शशशृङ्ग न जानामीति । न हि तत्र न जानामीति विशिष्टव्यवहारोत्थापकानुभवस्य प्रमात्वेऽपि, शशीयशृङ्गस्यापि प्रमाणज्ञानविषत्वमस्ति । यद्यपि शशशृङ्गादिशब्दजन्या प्रतीतिः शुक्तिरजतादिज्ञानवन्न भ्रान्तिरिष्यते, नापि घटादिज्ञानवत्प्रमेति । तथा च शशशृङ्गज्ञानस्य विकल्पमात्रत्वेन विशिष्टव्यवहारस्यापि प्रमात्वं नेष्टमिति शक्य प्रतिसमाधातुम् । तथापि 'शशशृङ्गं न जानामी'त्यत्र यथा विशिष्टं ज्ञानं तद्विपर्ययविरह तथा शशशृङ्गज्ञानमपीति न केनचिच्छक्यसमुत्थानम् । अतो न किञ्चिदेतत् । तस्माच्छब्दतः सामान्यतोऽवगम्य प्रमाणतो विशेष निर्दिधारयिषोरेवाय व्यवहार इति सम्यक् । नन्विदमयुक्तं भाति । विशेषस्य हि ज्ञातत्वे न जानामीत्यनुपपन्नम् । अज्ञातत्वे तु जिज्ञासैव नावकल्पते । अतो भावरूपाज्ञानमेवोक्तस्थलेऽभ्युपगन्तव्य भवतीति चेत् । अज्ञातस्य जिज्ञासानर्हत्वमिति कोऽयमपूर्वो नियम.? यावता सर्वत्राज्ञातस्यैव वस्तुन स्वरूपं प्रमाणतो ज्ञातु सर्व. प्रयतत इति स्थिति. । ननु सर्वथाप्यज्ञातस्य कथं जिज्ञासाविषयत्व घटते? बाढ न घटते । अत एव सामान्यतोऽवगतस्य

विषयत्वमुक्तमधस्तात्। विशेषस्य सर्वथाप्यज्ञातत्वाद्विषयत्वानुपपत्तिस्तदवस्थेति चेत्। न, विशेषस्य सामान्यासम्बद्धस्यासत्त्वात्, सामान्यस्य चावगतत्वे जिज्ञासोपपत्तेः। एतेन यदि ज्ञानाभावः 'इदं न जानामी'ति प्रतीतेर्विषयः, तदा ज्ञातेऽपि विषये तथा प्रतीतिः स्यात्, विषयज्ञानं विना विषयविशिष्टज्ञानस्यासम्भवादिति चोद्यमपि प्रत्युक्तं भवति। सामान्यतो ज्ञातस्यैव न जानामीति प्रतीतिविषयत्वात् सामान्यविशेषादिकल्पनान्येकस्मिन्नेव वस्तुनि व्यपेक्षाविशेषाद्भवतीत्येतदपि निवेदितं प्राक्। तस्मान्न जानामीति न मानं भवति भावाज्ञाने न वा त्वदुक्तं न जानामीति व्यवहारात्। न च मामप्यहं न जानामीति व्यवहारात् तत्सिद्धिः। तत्रापि हि मम विशेषरूपं न जानामीत्येवार्थो न पुनर्नजानाम्येवेति॥

२५ **'न किञ्चिदपि जानामी'त्यस्यार्थः :** ननु च 'मूढोऽहं त्वदुक्तं मामन्यद्वा किञ्चिदपि न जानामी'त्यनुभवे सति न किञ्चिदपि विषयान्तरमवशिष्यते यज्ज्ञानापेक्षया व्यवहार उपपाद्येत। मैवम्। तादृशस्यानुभवस्यैवासम्भवात्। सर्वोऽपि हि विशेषानुभवस्तद्व्यतिरिक्तयत्किञ्चिज्ज्ञानसापेक्ष एव। सजातीयविजातीयपदार्थान्तरेभ्यो निवर्त्यैव हि स्वविषयं विशेषविज्ञानं नामोपजायते। तस्मान्नैकलस्यैव विषयानुभवस्य स्मरणस्य कल्पनस्य वा सकलेतरानुभवादिनिरपेक्षस्य सम्भवोऽस्ति। अतो न सार्वविषयमज्ञानं न किञ्चिज्जानामीति, अपि तु यत्किञ्चिज्ज्ञानसापेक्षमेव। यत्किञ्चिज्जानात्येव ह्यत्यन्तमूढोऽपि, यथाहमसौ नामामुष्य पुत्र इत्यादिकम्। विशेषज्ञानं तु न विद्यते किंस्वरूपोऽहं परमार्थतः, कुत आयातः, क्व गन्तास्मि प्रेत्येत्यादिविषयकम्। तस्माद्विवक्षितविशेषाभावालम्बन एव न किञ्चिदपि जानामी-

त्यनुभवः । तथा विपरीतसंशयज्ञानयोरप्यज्ञानत्व युज्यते । अस्मिंस्तु पक्षे न किञ्चिज्जानामीति व्यवहारस्यार्थः— न यथार्थं किञ्चिज्जानामि, किं तु विपरीत संशयितमेव वा मे ज्ञानमिति । अत्रापि यस्मिन् कस्मिंश्चिद्विषये याथातथ्यतो ज्ञाते, तस्मिंस्तथा ज्ञातत्वेनाभिमाने सत्येव वा तदतिरिक्तविषये व्यवहारः । न तु सर्वत्र विपरीतग्रहाभिमानः संशयो वा शक्य इत्यनुसन्धेयम् । तदित्थ सामान्यतोऽवगतविशेषतोऽनिर्धारितात्मस्वरूपेण मुग्धेन प्रयुक्तं वाक्य 'नाह मामन्यद्वा किञ्चिदपि जानामी'ति रूप भावरूपाविद्यां साधयितुं नालमिति स्थितिः ॥

२६. **सुषुप्तौ तु भावाविद्यायाः सुतरामसिद्धिः** : तस्मान्न जागरिते भावाज्ञानसिद्धिः । सुषुप्तौ तु तस्य सुतरामसिद्धिः । न हि जातुचिदनुभूता भावाविद्या तस्यामवस्थायां शक्यानुभवा वा । ननु व्यञ्जकाभावादेवायमननुभवो नाभावहेतुरित्युक्तम् । सत्यमुक्तम्, न तु तद्युक्तम् । न हि विद्यते किञ्चिद्विनिगमकं किमविद्याभावादेवोत व्यञ्जकाभावात्तस्या अननुभव इत्यत्र । न चास्ति व्यञ्जकस्य कस्यचिदवकाशः सुषुप्तौ, यस्मिन् सति निश्चिनुयाम कतरदत्र युक्तमिति । संशयमात्रेणापि परपक्षः प्रतिषिध्यते । न च व्यञ्जकमन्यदपेक्ष्यैव सर्वत्र[1] वस्तूपलब्धिः । अन्यथा मनस उपलब्धिरेव न स्यात् । न हि तत्रापि ग्राह्यग्राहकव्यतिरिक्तं किञ्चिद्व्यञ्जकं शक्यशङ्कम् । अथोच्येत-मनसः स्वच्छद्रव्यत्वान्नास्ति व्यञ्जकान्तरापेक्षणम् । अविद्यायास्तु तमोरूपाया अस्ति तदपेक्षेति । न, तमोद्रव्यस्य सुतरामालोकसङ्ग-

१ यत्र वस्त्वन्तरेण गृह्यते वस्त्वन्तर तत्र ग्राह्यग्राहकव्यतिरिक्त करणान्तर स्यादिति नैकान्तेन नियन्तुं शक्यते ॥ —बृ० भा०

मासहिष्णुत्वाद्व्यञ्जकसत्त्वेऽप्यसिद्धयापत्तेः । न हि शार्वरादिकं तमो दिदृक्षुर्दीपहस्तो भवति कश्चिदमूढः । तस्मान्मनोरथमात्रमेतद्व्यञ्जकापेक्षणमविद्यायाः । न च स्वयज्योतीरूपस्य व्यवधानान्तररहितं स्वात्माश्रय भावाज्ञानमनुभवितुं व्यञ्जकान्तरकल्पनं पेशलं भवति । व्यञ्जकस्यापि हि व्यञ्जनसामर्थ्यमात्मन[1] एव । तस्मान्नास्त्येतद्व्यञ्जकाभावादननुभव इति । अथाङ्गीक्रियत एवानुभवः, तदापि नेष्टसिद्धिः । यतः सुषुप्तेः स्वाभाविकत्वात् सर्वस्यापि जन्तोस्तस्यां च विशेषानुभवे सति सुषुप्तित्वभङ्गाच्च तादृशाविद्या नास्त्येव सुषुप्ताविंत्येव स्याद्युक्ततर पक्षः । यद्यप्यविद्यावादिनः साक्षिवेद्यतामेवाविद्यायाः स्वीकुर्वन्ति । तथा च तत्पक्षे सुषुप्ते विशेषानुभवाभावेन सुषुप्तित्वभङ्गो नापादयितु शक्यत इव । तथापि 'सुषुप्तावहमविद्यामन्वभूवम्' इति कस्यापि सुप्तोत्थितस्य परामर्शानुदयेन तस्याः साक्ष्यनुभूतत्वे सर्वसम्प्रतिपत्त्यभावाच्च न तत्र तदनुभवः सेत्स्यति । विशेषानुभवस्तु नाभ्युपगम्यते न वा शक्याभ्युपगमः । तस्मादनुभवाभावो भावाज्ञान निरस्यति ॥

**२७. सुप्तोत्थितस्य 'मूढोऽहमास'मिति परामर्शान्नाविद्यानुमानम् :** ननु तथापि सुप्तोत्थितपरामर्शादनुमीयते तस्यानुभवस्य तत्काले सत्त्वम् । न, सुप्तोत्थितव्यवहारस्य जाग्रत्त्वापत्तुलनारूपमनोव्यापारजन्यत्वात् । 'न किञ्चिदप्यवेदिष'मिति हि परामर्शवाक्यस्य यथा जागरेऽयमहमस्मीमे देवदत्तादय इति प्रपञ्चज्ञानं, तथा

१ तच्च स्वविषयव्यञ्जनसामर्थ्य श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्येऽसंहते सर्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते ॥
—के० भा०

सुप्तौ नासीदित्यर्थ । अथ मन्यसे – प्रतियोगिज्ञानमन्तरा ज्ञानाभावस्यानुभवासम्भवादननुभूतस्य चोत्थितेन परामृष्टुमयोग्यत्वान्न स्मर्यते ज्ञानाभाव । किं तु ज्ञानविरोधिनो भावाज्ञानस्यानुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते ज्ञानाभावोऽपीत्यङ्गीकार्यमिति । तदसत् । सर्वाभावस्मरणान्न किञ्चिदवेदिषमिति । नन्वभावस्यानुभूतत्वे तदानीं तत एवानुभवित्रादिविकल्पसद्भावप्रसङ्ग । ततश्च सुषुप्तित्वोच्छेदश्च स्यात् । तस्याननुभूतत्वे वा कथं स्मरणमिति चेत् । अत्रोच्यते–सर्वाभावोऽनुभूयत इति कोऽर्थ इति विचारणीयमिति । न तावत् सर्वाभावो नाम कश्चित्पदार्थ शक्याभ्युपगम । तदनुभवितुर्हि सत्त्वे न सर्वाभाव । असत्त्वे च निस्साक्षिकस्य तादृगाभावस्यैवासिद्धि । न चास्ति तादृशाभावेऽनुमानस्य प्रवृत्ति [१] । तस्मादनुभवितु स्वरूपे सिद्धे सत्यनुभाव्यो नासीदित्येवार्थ परामर्शवाक्यस्य । अन्यथा भावरूपो धर्म एव कश्चिदभ्युपगम्येत चेत् सुषुप्तात्मनि प्रबुद्धात्मनि चाज्ञानमिति, तदा तस्मिन् विक्रियाप्युररीक्रियेतेत्यपराद्धान्तः स्यात् । नन्ववस्थाविशेषो व्यावहारिक इष्यत एवास्माभि, कथं तावता सिद्धान्तोपरोध इति [२] न । व्यावहारिकातिरिक्ताया परमार्थसत्ताया दुर्भणत्वाद्भवन्मते तात्त्विक एव स्याद्विकारः । स चानिष्टो निर्विकारात्मवादिनः । एतेनेदमप्यपास्तम्– न भावरूपिण्येवाविद्या वस्तुत । शशशृङ्गादिवत्तुच्छताव्यावृत्त्यर्थमेव तु भावत्ववाचोयुक्ति, ततो नैष दोष इति । तुच्छव्यावृत्ताया अपि तस्या अपारमार्थिकत्वासिद्धे । या ह्यविद्या भावविलक्षणाङ्गीक्रियते, साप्यवस्थात्रयेऽपि दण्डायमाना

१ धर्म्यसिद्धि प्रतिज्ञायां हेतुश्चानाश्रयो भवेत् ।
न चास्ति कश्चिद्दृष्टान्त सर्वशून्यत्ववादिन ॥ —वा०

जीवन्मुक्तेष्वपि विद्यमानाशा इत्येव स्वीक्रियते। तथा च ज्ञानेन तन्निवारणस्य पूर्ववद्दुर्भणत्वात्, तस्या अप्यपारमार्थिकत्वं न सेद्धुमर्हतीति भाववैलक्षण्याभ्युपगमो वृथा प्रयासकर एव स्यात् । तस्माज्जागरस्वापतुलनायां यथा जागरे प्रमातृविषयादिकमनुभूयते तथा सुषुप्तौ नासीदित्येव परामष्टुरभिप्राय इति गम्यते ॥

.२८. **प्रतियोगिज्ञानं नापेक्षितमभावज्ञाने सर्वत्र :** यत्तूच्यते प्रतियोगिज्ञानमन्तरा न शक्योऽभावानुभव इति । तदसत्. दृष्टान्तभावाद्विपक्षेऽपि । यथा-- इह समाजे नास्ति कश्चिदेस्किमो नामा विदेशीयो जन इति केनाप्युक्ते सत्याजन्मनोप्यदृष्टचरतादृशजनोऽपि व्युतिपत्सुर्यदि जानीते सभ्यास्सर्वे कार्णाटिका इति निस्सशयम्, तदा स्यादेवास्यापि पुरुषस्यानाकलितप्रतियोगिनोऽपि तादृशविलक्षणजनाभावज्ञानम् । तस्मान्नेदं तन्त्रं यत् प्रतियोगिज्ञानमवश्यमेवापेक्ष्यतेऽभावज्ञान इति । स्यादेतत्-- ज्ञाततयाऽज्ञानतया वा प्रतियोगी ज्ञानविषय एव भवति सर्वत्राभावज्ञाने । अत्र चाज्ञाततया ज्ञानविषयो भवति खल्वेस्किमोजन इत्यदोष इति । हन्त तर्हि न परमभावज्ञाने क्व तर्हि भावज्ञानेऽपि सर्वत्र प्रकृतविषयव्यावृत्तस्य कस्यचिज्ज्ञानमपेक्ष्यत एव ज्ञाततयाऽज्ञाततया वा । कस्यचिदप्यन्यविषयस्याज्ञाने हि ज्ञानमेव नोदीयादिति केन सङ्गतं स्यात्प्रतिज्ञानम्-- अभावज्ञानं सर्वत्र प्रतियोग्यनुभवमाकाङ्क्षत इति? एतेन-- जागरितेऽपि 'मामहं न जानामी'ति प्रतिभासो नाभावविषयकः, प्रतियोगिभूतज्ञानस्य धर्मिणश्चात्मनो ज्ञातत्वे तत्रैवाभावासङ्गतेः । अज्ञातत्वे तु तयोस्तदपेक्षस्याभावज्ञानस्य तत एव प्राप्त्यभावात्--इति यदाशङ्कितम्, तदपि प्रत्याख्यातं भवति । अत एवोक्तविधयाऽभावज्ञानस्य प्रतियो-

ग्यपेक्षाहीनत्वात्, यद्विषये कदापि ज्ञान न भविष्यति तत्रापि न जानामीति व्यवहृतिरुपपद्यते ॥

२९. **अननुभूतस्यापि स्मरणमस्ति :** यच्चोच्यते स्मरणमनुभूतपूर्वस्यैवेति, नायमप्येकान्तः[1] । यावता स्वप्ने सहस्रश' स्मृतय उद्भाव्यन्ते, न तु तेषा विषया सर्वेऽनुभूतचरा एव ; ननु–जाग्रदवस्थादृष्टसजातीयमेव स्वप्ने स्मर्यते न विजातीयम् । निद्रादोषात्तु विषयाणामन्यथान्यथा सम्बन्धन भवति । तद्यथा– स्वप्ने कश्चित्पश्यति स्वशिरश्छिन्नं स्वहस्ते निक्षिप्तम् । अत्र यद्यपि स्वशिरः स्वेनैव द्रष्टु न शक्यते न वा स्मरणार्हो हस्ते निक्षेप , तस्य पूर्वानुभवाभावात् । तथापि शिरश्छेदो हस्ते निक्षेपश्चेत्येतादृशा प्रत्येकमनुभूतपूर्वा एव जागरे । ताश्च निद्रादोषात्कथञ्चित् सम्बध्य तथा पश्यति स्वप्नदृक् । एतेनाननुभूतपूर्वाभासा सर्वा अपि स्मृतयो व्याख्याता वेदितव्या । एव चावश्य भाविनी व्याप्ति – सर्वापि स्मृतिरनुभूतपूर्वविषयिण्येवेतीति । नेत्युच्यते । जागरेऽननुभूतस्यापि शीर्षच्छेदहस्तनिक्षेपसम्बन्धस्य त्वयैवोद्घाटितत्वात् । न हि संश्लेषोऽनुभूतपूर्वः, अथ च स्मर्यते । ननु संश्लेषो न स्मर्यते? न, कदाचिदेवमपि स्मरणसम्भवे बाधकाभावात् । 'अहं पुरा मम मस्तकं छात ममैव पाणौ न्यस्तं चाद्राक्षमि'ति स्वप्ने जायेतैव क्वचित्स्मृति., मिथ्याभूताया इत्थमेव भाव्यमिति नियन्तुमशक्यत्वात् । यद्युच्येत-स्वप्ने स्मृतिरेव तावन्न सम्भवति । सर्वविधस्यापि स्वप्नस्य केवल जाग्रद्वासनामयत्वात् तत्रानुभूतेरेवानवकाशात् । अनुभूति विना तु न स्मृतिरि-

१. दृष्टानुभूतमप्यर्थं कदाचिद्विस्मरत्यलम् ।
कदाचिदप्यदृष्टं तु चेत' पश्यति दृष्टवत् ॥ —यो० उप०

त्यतो वर्णित ज्ञान विभ्रममात्रमिति । तत्रानुभूति विना न स्मृतिरिति नियमस्याद्याप्यसिद्धतया तद्बलेन स्वप्ने स्मृत्यभावसाधनानुपपत्ते. स्वप्ने स्मृतिरूपज्ञानस्य सार्वलौकिकानुभवसिद्धस्य प्रतिज्ञामात्रेणापलापो न युक्त । अपि च जाग्रत्स्वप्नयोर्भेदे स्वप्नस्य च वासनामयत्वे च निश्चिते खलु जाग्रत्यनुभूतमेव स्वप्ने स्मर्यत इति नियम' शक्यप्रतिज्ञ' । तदेव तु निरसिष्यतेऽनुपदम् । ततश्च नियमभङ्गस्तदवस्थ' ॥

३०. **ज्ञानाभावस्यापि नानुभव सुषुप्तौ :** तस्मात् अभावज्ञानस्य प्रतियोगिप्रतिभानसापेक्षत्व स्मरणस्य चानुभूतपूर्वविषयत्वं चेति हेतुद्वयमनैकान्तिकम् । अतश्च सुप्तप्रबुद्धपरामर्शाद्भावाज्ञानानुमान नवीनानामाविद्धमार्गानुसरणनिदानमिति सिद्धम् । अस्तु वा तद्द्वयमपि निर्दुष्टम् । तथापि न भावाज्ञान सिध्यति सुषुप्तौ । कुत एतत्? अज्ञानस्य भवदाभमतस्य ज्ञानविरोधित्वेनैवाङ्गीकारात् तत्र विरोधनिरूपकज्ञानस्य ज्ञातत्वेऽज्ञातत्वे वा अभावाज्ञानपक्षे य आपादितो व्याघात स एव स्यात्, नत्वभिमतसिद्धि । यत्तु- भावाज्ञान प्रमाणवृत्तिनिवर्त्यं न तु साक्षिनिवर्त्यम् । विरोधनिरूपकज्ञानस्येव तस्यापि साक्षिवेद्यत्वात्. अतो न दोष इति । तत्र साक्षिवेद्यत्वस्य सर्वसम्प्रतपत्त्यभावात् प्रमाणवृत्तिनिवर्त्यत्वस्य चाऽव्याप्यसिद्धे:, उक्तदोषादनिस्तार । एव स्मरणस्यानुभूतविषयत्वाङ्गीकारेऽपि नेष्टसिद्धिः । किञ्च ज्ञानाभावप्रमित्यर्थं किल भवतोपन्यस्तं भावाज्ञानस्य स्मर्यमाणत्वान्यथानुपपत्तिरूपं प्रमाणमङ्गीकरणीयम् । न तु वयं सुषुप्तौ ज्ञानाभावस्य तदन्यस्य वा कस्यचिदप्यनुभव प्रतिजानीमहे । प्रत्युत तत्र विशेषानुभवोऽशक्य एवेति ब्रूम' । तस्माद्भावस्याभावस्य वा कस्यचिदप्यनुभवस्यानभ्युपगमात् कथं सिद्धवदानीयेतेह भावाज्ञानम्?

न च-- 'न किञ्चिदवेदिष'मिति स्मरणस्यानुभूतपूर्वविषयकत्वे माना-भावस्य त्वयैव दर्शितत्वात् तद्बलेन न किञ्चिदपि सेद्धुमर्हति । तथा च सुषुप्तौ सर्वविषयाभावः कथं प्रमीयताम्--इत्याशङ्क्यम् । तत्रापि तात्पर्याभावात् । न हि वयं न किञ्चिदवेदिषमिति स्मृतिवलादेव सुषुप्ते विषयाभाव ब्रूमः । कथ तर्हि विषयानुपलब्धेः कस्या अप्युप-लब्धेरनवकाशत्वाच्च तत्र तथेति । त्वदभ्युपगमरीत्या तु स्मरणमङ्गी-कृत्य त्वं वोध्यसे—दृष्टार्थविषया चेत् स्मृतिः, तर्हि न वैषम्येन भाव्यं दृष्टस्मृतयोः । न किञ्चिदवेदिषमिति स्मृतिमभ्युपगच्छसि, तथा च सर्वाग्रहणमेव पूर्वरूपं सिध्यति, न भावाज्ञानग्रहणमिति ॥

**३१. न किञ्चिदज्ञासिषमित्यस्य सुषुप्तिविषयकस्मरणत्वा-भावे युक्तिः :** किं चान्यत् स्मरणमनुभूतपूर्वविषयकमिति यत्र यत्र ज्ञातं तस्य सर्वस्यापि स्थानस्य विषयविषयिभावानुभवानुकूलत्वमेव दृष्टम् । न तु तद्विपरीतं क्वचिन्निर्वर्णितम् । तथा च दृष्टसामान्यादनुमास्यतः कथमक-स्माद्विसजातीयभूमावप्यनुमा सम्भवति ? अन्यथा चक्षू रूपग्राहकमिति कृत्वा सर्वमपीन्द्रियत्वसाम्यत्तद्भिन्नमिन्द्रिय रूपग्राहकमेव भवितु-मर्हतीति कस्मान्नानुमिनुयाः ? तस्मान्न किञ्चिदज्ञासिषमिति न सुषु-प्तिगविषय स्मरणम्, न वा तस्य स्मरणत्वेऽपि तथाभूतानुभवपूर्व-कत्वं युक्तिसिद्धम् । सुषुप्त्यनुभवविरुद्ध च तत् स्मरणाभासमिति कथञ्चिन्नेयमन्यथा, न तु भावाज्ञानकल्पकत्वेनेति सिद्धम् ॥

## जागरितप्रपञ्चोपलम्भार्थं न भावाज्ञानमङ्गीकार्यम्

**३२. जाग्रत्स्वप्नयोः कार्यकारणभावो नास्ति :** स्यादेतत्—स्वप्नस्य वासनामयत्वाज्जाग्रद्भिन्नत्वं तावत् स्पष्टम् । तथा च यद्यपि

स्वप्नप्रपञ्चस्य जाग्रत्प्रपञ्चवासनारूपकारणं विद्यते । तथापि सुषुप्तावभावता गतस्य जागरितप्रपञ्चस्य पुनरुद्भवे कारणं नास्ति तस्यन्मते भावाज्ञानं नाङ्गीक्रियते । भवितव्य तु तेन, अन्यथा निर्लेपमभावता गत प्रपञ्च पुनरपि निष्कारणमेव समुत्पततीत्यापद्येत । तस्माज्जागरितप्रपञ्चस्य पुनरुदये हेतोरभावो मा प्रसञ्जीत्यत' सुषुप्तावभ्युपगन्तव्यमज्ञानमिति । अत्र भवान् प्रष्टव्यः– जागरितवासनानिमित्त॰एव स्वप्न इति कथमध्यवसितोऽसीति । यद्युच्येत -- स्वप्नाः खलु यथा दृश्यन्तेन्यथान्यथा न तथा जागरितानीत्येकरूपतालिङ्गान्निश्चीयते जाग्रदवस्थायास्तथात्वम् । जाग्रद्दृष्टसजातीयविषयानेव तु स्वप्नदृक्पश्यतीत्यतोऽवगम्यते स्वप्नस्य जाग्रत्कार्यत्वमिति । तदा भवति प्रश्नः -- कदाऽवधार्यते स्वप्नस्य चलत्वम्? किं स्वप्नानुभवकाले कालान्तरेवेति । किञ्चात? एतत्ततो भवति -- यदि स्वप्नवेलायामेव स्वप्नोऽत्यन्तचल इति निश्चयो यथा जागरितं स्थिरमिति जागरितकाले, तदा स्यादपि पृथग्जातीयत्वं तयोः । अथ स्वप्नसमनन्तरभाविन्यामवस्थाया प्रतिपद्यसे तच्चलत्वम्, तदानुभवकाले स्थास्नुत्वबुद्धिः[1] सदृशैवोभयोरिति किं केन सङ्गतम्? देशकालनिमित्तसम्पत्तिश्च तत्तदवस्थोचिता विद्यत एवोभयत्रापि । यत्सत्य जाग्रत्त्वेनाभिमतायामवस्थायां विद्यमाना देहेन्द्रियबुद्धिमनआदयो न त एव[2] भवितुमर्हन्ति स्वप्नत्वेन विज्ञायमानायामप्यवस्थायाम् । अन्यथा हि तयोरन्यतरस्यां विद्य-

१. ननु स्वप्ने दृष्टा प्रतिबुद्धस्यानृता भवन्ति विषया॰? सत्यमेव, जाग्रद्बोधापेक्षं तु तदनृतत्त्वं न स्वत । तथा स्वप्नबोधापेक्षं च जाग्रदृष्टविषयानृतत्वं न स्वतः ॥ —छा॰ भा॰

२ स्वप्ने चावस्तुकः काय॰ पृथगन्यस्य दर्शनात् ।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ —का॰

मानाना तेषामपरस्यामपि सप्रयोजनता स्यात्, न तु तदस्तीति। तथापि नैव तयोरवस्थयो कार्यकारणाभावोऽभ्युपगन्तु[1] शक्यते। न हि विद्यमानादसत सम्भवोऽभ्युपगम्यते केनचित्। जागरितं विद्यमान स्थिरमित्युक्त भवता। स्वप्नश्च चलो मिथ्यास्वरूप। तत्र कथ विद्यमानाज्जागरितादविद्यमान स्वप्नदर्शनमुत्पद्येत्? न चाविद्यमानात्[2] स्वप्नादेव जागरितमुत्पत्तुमर्हति। एवमुररीकृत्यापि जागृते स्थैयस्त्व न सिध्यति जाग्रत्स्वप्नयोः कार्यकारणभाव॥

**३३. जागृतेः स्थिरत्वं नोपपन्नम् :** न चार्हति स्थिरं भवितु जागरितम्। नन्वनुभूयते स्थिरत्वं जागरितस्य सर्वेणापि? इदमेव मे गृहमिदमेव क्षेत्रमिमे एव च पुत्रमित्रादयो ह्योऽप्यासन् श्वोऽपि भविष्यन्तीति कृत्वा खलु सर्व प्रवर्तते--इदमद्य मया लब्धमिम प्राप्स्ये पुनरिति। यदि तु व्याहन्येत स्थिरत्वबुद्धि सर्वत्रापि जाग्रद्विषये, ततो न केवल लौकिकप्रवृत्त्यनुपपत्ति सर्वशास्त्रोपदेशश्रवणादिप्रवृत्तयोऽपि व्यर्था भवेयुरस्थिरत्वनिश्चयात् सर्वस्येति। अत्रोच्यते। नास्माभिरभिप्रेयते स्थैर्यबुद्धिर्जागरे नास्तीति, कथ पुन, स्थिरत्वं न पारमार्थिकमिति। सर्वा हि प्रवृत्तय प्रपञ्चे स्थास्नुत्वबुद्धिमात्रनिबन्धना न तु पारमार्थिकमपि स्थेमानमपेक्षन्त इति का हानिर्व्यवहारस्य? स्यादेतत्--यद्यपि स्थिरत्वबुद्ध्या प्रवृत्तिरवकल्पते, तथापि प्रवृत्तेर्व्यर्थता तद-

१. जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावशङ्कामपनयन्नाह॥ —का० भा०

२. नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा।
सच्च सद्धेतुकं नास्ति सद्धेतुकमसत् कुत॥ —का०

यदपि मन्यसे जागरितात् स्वप्नो जायत इति, तदसत्। न भूताद्विद्यमानादभूतस्यासत सम्भवोऽस्ति लोके॥ —का० भा०

वस्था । न हि मनोरथकल्पितेन भोजनेन कस्यापि तन्निरुद्धीया-दिति । तन्न । कस्मात्? यथा हेतु सत्यत्वबुद्ध्येव गृह्यते, तथैव फलमपीति हेतुफलक्रियाकारकादिसत्यत्वबुद्धौ[1] स्थितायां न केन चित् प्रवृत्तिवैफल्य शङ्कितुं शक्यते । तस्मात् स्थिरत्वबुद्धिरस्ति जागरे स्थिरत्व तु वितथमिति[2] स्थितम् ॥

यत्तूच्यते-- स्थिरत्वमेवानुभूयते, इदमेव वस्तु ह्योनुभूतवा-नहमिति प्रत्ययदर्शनादिति । अत्र भवति प्रश्न – स्वप्ने जागरिते च विषयप्रत्यभिज्ञाने समाने[3] सति स्वप्नवस्तूना तदनुभवाना च मिथ्यात्वमुपेत्य जागरितवस्तूनां परं स्थिरत्व सङ्गिरमाणस्यानुपपत्ति-ग्रस्तत्व कथ न भवेदिति । ननु तथापि स्वप्नप्रत्यभिज्ञा बाध्यते न जाग्रत्प्रत्यभिज्ञा? बाढम्, तथापि तत्काले बाध्यत्वाभावस्तु समान एवोभयत्र । अन्यथा स्वप्नकाल एव बाध्यत्वे तदात्व एव स्वप्न-मतिरुत्पद्येतेति स्वप्नत्वमेव तस्या स्थितेर्विहन्येत । इदमेव हि स्वप्नत्वं नाम स्वप्नस्य यत् स्वकाले बाध्यत्वेनानवभासमानत्वमथ चा-नन्तरप्रत्ययबाध्यत्वम् । तस्मात् सर्वापि दृश्यानुभवस्मृतिप्रत्यभिज्ञा-क्षेत्रभूता स्थितिस्तत्काले तत्तत्स्थास्नुत्वविचारे सति स्थास्नुत्वबुद्ध्येव गृह्यते । समनन्तरेणत्वनुभवेन बाध्यमाना चलेत्यध्यवसीयते । यद्यपि

१. अतो हेतुफलकल्पनात् फलविज्ञानं, ततो हेतुफलस्मृति, ततस्तद्वि-ज्ञानं तदर्थक्रियाकारकतत्फलभेदविज्ञानानि, तेभ्यस्तत्स्मृति, तत्स्मृतेश्च तद्वि-ज्ञानानीत्येवं बाह्यानाध्यात्मिकाश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥ —का० भा०

२ ननु . . . अत्यन्तचलो हि स्वप्नो जागरितं तु स्थिर लक्ष्यते? सत्यमेवमविवेकिना स्यात् ॥ —का० भा०

३. विशेषाकारमात्रं तु सर्वेषा मिथ्याप्रत्ययनिमित्तम् ॥ —छा० भा०

यथा स्वप्नोऽद्यतनजागरिते मिथ्येत्यध्यवसीयते तथाद्यतनजागरितस्य बाधो न कुत्राप्यनुभूयत इति वैलक्षण्यमिव भवति स्वप्नाद्यतनजागरितयोः। तथापि मिथ्यात्वेनाध्यवसितस्वप्नोऽपि तत्काले जाग रितत्वेन तत्पूर्वतनस्वप्नविलक्षणत्वेन कुत्राप्यवस्थायामबाध्यत्वेन चाभासिष्टेति नैव प्रस्मर्तव्यम् । तदेवं नास्ति स्थिरत्वं जागृतेः । कुतः पुनः कार्यकारणभावो जागरितस्वप्नयो.?

**३४. जागरितस्वप्नयोः बाह्यत्वमानसत्वकृतभिदा नास्ति :**

ननु च जागरितानुभाव्यो विषयः केवलं मानसो न भवति कस्तर्हि बाह्योऽपि । न हि जागरिते गृहादिकमनुभूयमान नास्ति बहिरपि, यथा स्वप्ने दृश्यजातं बहिरुपलभ्यमानमिवात्मानं दर्शयदपि मनस्येव कल्पितं वर्तते । स्वप्ने य संवादो नाम वस्तुन एकत्वे स आभासमात्रः, मानसत्वात् तद्वस्तुनः । तत्र प्रत्यभिज्ञातॄणां पुरुषाणामपि स्वप्नदृग्भिन्नानां तथात्वाच्च । अन्यथा हि स्वप्नदृग्यदा प्रतिबुध्यते तदा तेन समं तेऽपि प्रतिबुध्येरन्निति । जागरिते तु प्रतिपुरुषमेकधैवोपलभ्यमानं, न परं मनसि, कुत्र तर्हि बहिरपि सर्वैरविशेषाकारेण विज्ञायमानं सत् कथं स्वाप्नवस्तुसाम्यमात्मनः समासादयेत्? तस्मात् समानेऽपि प्रत्यभिज्ञासंवादादिके मानसत्वबाह्यत्वकृतो विशेषो व्यावर्तयति जागरितं स्वप्नात् । बाह्यत्वादेव जागरितस्य सत्यत्वम्, मानसत्वाच्च स्वप्नस्य तद्वासनाजन्यत्वमिति तयोरवस्थयोः सम्बन्धोऽपि न दुर्घट इवेति चेत् । मैवम्, कल्तित्वाविशेषात्[1] । यदि बाह्यं यदि वा मानसं तदुभयमपि कल्पितमेव, स्वप्नेऽपि तादृश-

१. चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहि ।
कल्पिता एव ते सर्वे विशेषो नान्यहेतुक ॥ —का०

विभागस्य विद्यमानत्वात्। येन हि न्यायेन स्वप्नविषयाणां मानसत्वमङ्गीक्रियते, स[1] एव जागरितवस्तूनामपि तथात्वमानयति। यथा हि स्वप्नदृग्विषया जागरिते नानुभूयन्ते तथा जाग्रद्विषया अपि स्वप्ने, अतो नास्त्यत्र किमपि वैषम्यम्। तस्माज्जडवाक्यमिदं मानसत्वाज्जागरितजन्यत्वं स्वप्नस्येति। वार्तमानिकत्वेन विभाव्यमानः सर्वोऽपि ह्यनुभवो भूतभाविपारम्परीं तत्सध्रीची स्वप्ने जागरिते च सममेव प्रत्युपस्थापयति। कालत्रयबुद्ध्युपरक्तं सर्वमप्युभयोरवस्थयोर्मानसमेवोक्तदिशेति नैवास्ति विशेषः॥

**३५. स्थिरत्वानुभवाभासपरीष्टिः** : अपि च मृषैवोच्यते स्थिरत्वमनुभूयते जागरितविषयस्येति। तथा हि– इदमेव वस्तु ह्योऽन्वभूवमित्यत्र ह्योनुभूतं वस्तु स्मृतिमात्रे वर्तते, नत्वनुभूयते यथाद्यतनं प्रत्यक्षविषय वस्तु। तयोरेतयोरेकत्वेन प्रत्यभिज्ञा व्यवहारे यद्यप्युपयोगिनी, तथापि तत्त्वपरीक्षायां साध्वीति नावकल्पते, उपष्टम्भकानुभवाभावात्। तस्मान्न प्रत्यक्षतोऽनुभूतं वस्तुनः स्थैर्यं, अपि तु स्वानुभवविवेचनासमर्थैर्भ्रान्तैरेव[2] लौकिकैस्तथा निश्चितमिति सिद्धम्। न हि स एवायं प्रपञ्च इति प्रमितौ प्रत्यभिज्ञापकः प्रपञ्च एव भवितुमर्हति। यदि नाम प्रपञ्चोऽयमभविष्यत् सन्ततो वस्तुसंस्तदापि तस्य तथात्वे प्रत्यभिज्ञापकान्तरमपेक्षिष्यतैव, प्रपञ्चस्य स्वयंस्फुरणत्वाभावात्। न च न विच्छिद्यते प्रपञ्चसन्तानः, जागरितातिरिक्तावस्थायामत्यन्तमविद्यमानत्वात्। न चात्मा स्वयं तस्य प्रत्यभिज्ञाता, उक्तहेतोरेव। न हि तस्योच्छेदस्य द्रष्टा सन् स्वयमेव तदैक्यमपि विश्वसिति तदुपनाय-

१ बाह्या एव मानसा मानसा एव च बाह्या॥ —छा॰ भा॰

२ निमेष प्रति यामिन्या यथान्या स्वप्नदृष्टयः।
क्षणोत्पत्तिविनाशिन्यस्तथैता लोकदृष्टयः॥ —यो॰ उप॰

कानुभवाभावेऽपि । न चास्ति वस्त्वन्तरमात्मानात्मभ्या व्यतिरिक्तम्, यत् स्यादभिज्ञापकमेकत्वस्य । तस्मान्नास्ति प्रत्यभिज्ञान प्रपञ्चस्य । यत्पुनराशङ्क्यते स्वाप्नप्रत्यभिज्ञातारो मानसा इति युज्यतेऽवस्थाया तत्र प्रत्यभिज्ञाया मृषात्वमिति । तदुक्तोत्तरम्, जागरितप्रत्यभिज्ञातॄणामपि तुल्यन्यायेन मानसत्वाविशेष इति । तस्मात्स्वप्ने प्रत्यभिज्ञान स्वप्नदृश एव, जागरिते तु सर्वेषामपीत्येतदप्यसारम् । तदेव स्थिरत्वानुभूतेराभासमात्रत्वान्नैतदुपपन्नं स्थिरत्वाम्रेडनात्सर्वेषामपि जागरितप्रपञ्चः स्थिर इति ॥

एवं प्रध्वस्ते जागरितस्थिरत्ववादे स्वप्नजागरितयोर्भेदो न केनापि प्रदर्शयितुं शक्यते । मिथ्याप्रतीतिरूपत्वात्,[१] तत्काले स्थिरत्वबुद्धिसमुत्पादकत्वसाम्यात्, जागरितबुद्ध्युपरक्तत्वेपि तथात्वे हेतोरभावाच्चोभयोरपि स्वप्नत्वमेव युक्तमास्थातुम् । तदेवं स्वप्नत्वसाम्यादुभयोरप्यवस्थयोरपरस्परकारणत्वमेव युक्तं प्रतिपत्तुम् । तथा च यथा स्वप्नप्रपञ्चोऽनपेक्ष्यैव[२] कारणं कल्पितकारणसापेक्षं[३] वा जायते, तथैव जाग्रत्त्वेनाभिमतोऽपि प्रपञ्च इति न तस्य भावरूपाज्ञानोदीक्षा विद्यते। तस्मात्तदर्थमपि न कल्पनीयमज्ञानं सुषुप्तौ ॥

**३६. स्वप्नादुत्थितिर्यथा, तथा सुप्तोत्थितिरप्यज्ञानं विना प्रकल्पते : इतश्च न कल्पनीयं भवत्यज्ञानम् ।** स्वप्ने तावन्न विद्यते

१ तस्मात्स्वप्ने मृषाध्यारोपिता एवात्मभूतत्वेन लोका अविद्यमाना एव सन्त· तथा जागरितेऽपीति प्रत्येतव्यम् ॥ —बृ० भा०

२ स्वप्ने विपर्यासात् हस्त्यादीन् धर्मान् पश्यन्निव विकल्पयति । तत्रैव पश्यति न तु जागरितादुत्पद्यमानान् ॥ —का० भा०

३ जन्म मायोपमं तेषां सा च माया न विद्यते ॥ —का०

जाग्रत्प्रपञ्चः । एवं च यथा स्थित्यन्तरत्वेऽपि स्वप्नस्य तत्राविद्यमानं प्रपञ्चं ततः प्रबुद्धः पश्यति, तथैव सुप्तोत्थितोऽपि द्रक्ष्यतीति किं तादृशाज्ञानकल्पनेन? ननु स्वप्नेप्यज्ञानं विद्यत एव । कथं स्याद्दृष्टान्तादानम्? मैवम्, मिथ्याज्ञानादित्रितयव्यतिरिक्तस्य तस्य तत्राननुभवात्, तत्कल्पनाया अन्याय्यत्वान्निष्फलत्वाच्च । अपि च यदि नाम विद्यते स्वप्न अज्ञानं कथमेतावता प्रबुद्धस्य जागरप्रपञ्चप्रतीतिः सम्भवेत्? न हि जाग्रत्प्रपञ्चोऽपि स्वप्ने विद्यत इति युक्तम् । न च स्वाप्नमज्ञानं जाग्रत्प्रपञ्चकारणम्, वैपरीत्यस्यापि शक्यशङ्कत्वात् । दर्शितश्च प्राक् स्वप्नजागरितयोः कार्यकारणभावाभावः । न च स्वाप्नाज्ञाननाशे जागरिताज्ञानस्यात्मलाभे च निमित्तं विद्यते । तदेवं नास्ति स्वप्नात्प्रबोधे प्रबुद्धस्य च जागरितप्रपञ्चप्रतीतौ वा कारणं यदा स्वप्नकल्पकाद्भिन्नं जाग्रद्व्यवहारकल्पकमज्ञानम् । यदा पुनः स्वप्ने जागरिते च वर्तमानमज्ञानमेकमेव, तदा स्वप्नजागरितयोरेकाज्ञानकार्यत्वाद्भिन्नप्रपञ्चप्रतीतौ हेतुरेव न स्यादिति महदनिष्टम् । नह्यज्ञानमेव निमित्तान्तरमनपेक्ष्य स्वाप्नप्रपञ्चं समुपसंहृत्य जाग्रत्प्रपञ्चात्मना अकस्मात्परिणमत इति शक्यमुत्प्रेक्षितुम्, स्वभाववादप्रधानवादान्यतरसाङ्कर्यप्रसङ्गात् । स्वप्नकल्पकाज्ञानानिवृत्तावपि स्वप्नबाधाङ्गीकारे भावाज्ञानानिवृत्तावपि तत्त्वज्ञानेन सकलसंसारबाधाभ्युपगमप्रसङ्गाच्च । अथ मतम्— यद्यपि स्वप्नजागरितयोरेकमेवाज्ञान तथापि तस्याकारभेदवत्ताभ्युपगमात् समनन्तरोक्तदोषो न प्रसरति । स्वप्नकल्पकाज्ञानाकारे निवृत्तेऽपि जागरितव्यवहारो नानुपपन्नः । तद्धेत्वज्ञानाकारस्य तत्र सत्त्वादिति । तदप्ययुक्तम्, तत्तदाकारनिवृत्तौ हेतोर्मृग्यत्वात् । अज्ञाने सन्त्याकारभेदा इत्युपपादयितुमशक्यत्वाच्च । निरसिष्यते च स्वावसरे अज्ञानाकारभेदवादः । तस्मा-

दभ्युपगम्याप्यज्ञानं स्वप्ने जागरितप्रपञ्चोपलम्भः स्वप्नादुत्थितस्य नैवोपपादयितुं शक्यते । तत्समीचीन एव दृष्टान्तः स्वप्नादुत्थित इव सुप्तोत्थितोऽपि जागरितप्रपञ्चं द्रक्ष्यतीति ॥

३७. **स्वाप्नवस्तूनां प्रातिभासिकत्वे विचारः :** एतेनैतदपि प्रत्युक्तं यदाहुः केचित्-- स्वप्नजागरितयोर्यद्यप्येकैवाविद्या तथाप्यागन्तुकदोषजन्यत्वं स्वप्ने विशेषः । आगन्तुकदोषजन्यत्वं च प्रातिभासिकत्वप्रयोजकमित्युपपद्यते स्वप्नस्य प्रातिभासिकत्वं जागरितस्य च केवलाविद्याकार्यस्य व्यावहारिकत्वम् । तदेव प्रातिभासिकस्य स्वप्नस्य बाधे जागरितप्रपञ्चोपलम्भो युज्यत एव । अत एव जागरितेऽपि प्रातिभासिकानां शुक्तिरजतादीनां बाधे न जाग्रत्प्रपञ्चस्य सकलस्य बाधः, दोषसहिताविद्याजनितरजतनाशेऽप्यविद्यानाशाभावादिति । अविद्याव्यतिरिक्तस्य तादृशस्य दोषस्य स्वप्नमात्रसत्त्वे जाग्रत्वेनाभिमतावस्थायामसत्त्वे च मानाभावात् । तुल्यमेव ह्युभयोरप्यवस्थयोर्यत्काले जाग्रत्त्वेनाभासमानत्वम् । न च स्वप्नकाले स्वप्नत्वं निद्रादोषजन्यत्वं वा तस्य समनुभूयत इति यत्किञ्चिदेतत् । यदैवमसम्भावनीयमागन्तुकदोषजन्यत्वं स्वप्नस्य, कथमिद शक्यते निर्धारयितुं यत्स्वप्नघटादय एव प्रातिभासिकसन्तो जागरितघटादयस्तु व्यावहरिका एवेत्यविद्यापरिणामित्वाविशेषेऽपि? न च मृदाद्यवयवमपेक्ष्यैव जागरितघटादिरुत्पद्यत इत्यस्ति वैषम्यं प्रातिभासिकवस्तुनः सकाशादिति युक्तम् । यावता स्वप्नेऽपि तात्कालिकोऽस्त्येव कश्चिदवयवः कार्यस्य । किञ्चैव सुषुप्तावपि मूलाविद्यामङ्गीकुर्वतां तत्रावस्थायां प्रातिभासिककार्योत्पादो दुर्वार एव स्यात् । न च तत्र निमित्तकारणस्यान्तःकरणस्याभावान्नोत्पद्यते प्रातिभासिकं वस्त्विति साम्प्रतम् । यस्मा-

दनुपद वर्णयिष्यमाणरीत्या सुषुप्तौ निमित्ताभावे तस्य निमित्तस्य न कदाप्यात्मलाभस्तत्र स्यादिति सुषुप्तिस्थानादनुत्थानमेव प्रसजेत् ॥

३८. **प्रातिभासिकेषु रूपभेदकल्पनं निष्प्रमाणकम् :** एतेन जागरिते शुक्त्याद्यवच्छिन्नचैतन्याश्रिततूलाविद्यापरिणामो मिथ्यारजतादिः, न तु मूलाविद्यापरिणाम इति प्रातिभासिकेष्वेव केषाञ्चिन्मूलाविद्याकार्यत्वं केषाञ्चित्कार्याणां तु तूलाविद्याकार्यत्व चाभ्युपयन्तोऽपि परास्ताः । सर्वदापि रजताद्युत्पत्तिप्रसङ्गात् । न च दोषसहकृततूलाविद्यापरिणामस्य सर्वत्राभावान्नोक्तप्रसङ्गः । सर्वत्र भ्रमज्ञाने दोषसद्भावस्यादर्शनात् । न हि व्योमादिषु तलमलवत्त्वाद्यध्यासे दोषाद्यपेक्षा विद्यते । न चाविद्यैव तत्र दोष इति वाच्यम्, शुक्त्यादिष्वपि तथैव स्यादिति सर्वदा सर्वेषामपि रजतादिविभ्रमः स्यादित्युक्तदोषानुषङ्गात् । कि च मूलाविद्यायामिव तूलाविद्यायामपि नास्ति प्रमाणमिति सर्वमेतदभित्तिचित्रम् । परीक्ष्यते चेदं स्वावसर इत्यलमत्र प्रसङ्गागतचिन्तनेन ॥

तदेवं स्वप्नस्य प्रातिभासिकत्वे जागरितस्य च व्यावहारिकत्वे हेतोरनिरूपणात् नास्त्येवमपि तयोरवस्थयोर्वैलक्षण्यम् । तस्मात् साधूक्तं– यथा स्वप्नाज्जागरितं गतस्य जागरितप्रपञ्चोपलम्भनं तथैवानपेक्ष्य भावरूपाज्ञानं जागरितप्रपञ्चोपलम्भनमस्तु सुप्तोत्थितस्येति ॥

३९. **भावाविद्याङ्गीकारेऽपि प्रकृतदोषोऽपरिहार्यः :** अपि च भावाज्ञानाङ्गीकारेऽपि प्रपञ्चोपलम्भविचारो न निष्कण्टकः । तथा हि– सुषुप्तिः किं सनिमित्ताभ्युपगम्येत किं वा निर्निमित्ता? यदि निर्निमित्ता, सर्वस्यापि सर्वदा सुषुप्तिप्राप्तिः सुषुप्त्यभावो वा प्रसज्येत । न चैतदिष्टम् । सनिमित्तत्वकल्पे पुनस्तन्निमित्तं किमज्ञान-

मुतान्यदेवेति चिन्तनीयम् । अज्ञानमेव चेन्निमित्तम्, तदा सर्वदैव सुषुप्तिप्रसङ्गः सर्वस्यापि, मुख्यमुक्तिपर्यन्तं सर्वस्मिन्नपि पुरुषेऽनुज्झित्वा जीवन्मुक्तमप्यज्ञानानुवर्तनस्याभ्युपगमात् । अथान्यदेव निमित्तमज्ञानात्, तदा किं सुषुप्तावप्यनुवर्तते तदाहोस्विन्नेति विचार्यमाणे उभयथाप्यनिष्टं प्रसरति । कथम्? यद्यनुवर्तते सुषुप्तेरविमोक्षप्रसङ्गः, यदि नानुवर्तते ततः कुतो न भवति निद्राभङ्ग इति । न च मन्तव्यम्– दण्डादिनिमित्तापायेऽपि घटादीनामनपायो दृष्टस्ततः कुचोद्यमेतदिति । यस्मान्निद्रावस्थापि घटवद्द्रव्यमिति नाभ्युपगम्यते येन तस्योपादाननिमित्तादीना मृद्घटदण्डादिदृष्टान्तसाम्येन निरूपण समञ्जस' स्यात् । अथवा पुनरस्तु कथञ्चिन्निमित्तलोपेऽपि निद्राया नास्ति विपरिलोप इति । तदापि दोष आवृणोत्येव प्रपञ्चोपलम्भने निमित्तभूतस्याज्ञानस्य सुषुप्तौ लब्धप्रसरत्वेऽपि तत्कार्यभूतः प्रपञ्चः कञ्चित्कालं नोदेतीत्यत्र हेत्वभावरूपः । ननु सत्यप्युपादानकारणे मृदादिके यथा दण्डाद्यभावाद्घटाद्युपजनो न भवति, तथेहापि स्यादिति । न । कुतः? सुषुप्तेः कदाप्यनपायप्रसङ्गात् । यदि हि तत्र प्रपञ्चाभिव्यक्तिनिमित्तं न विद्यते, तदा तत्कथंमात्मान कालान्तरेऽपि लब्धुमीशेत? अथ स्यात्– संस्काररूपं कर्मजातमस्ति तत्रेति । यथा हि वटबीजे वृक्षोत्पत्त्यनुकूलशक्तिर्वर्तते तथाप्यविकलानां पृथिव्यादीनां जलसेकादिकर्मणां च साहाय्यमपेक्ष्यैव तस्मादङ्कुरो जायते नान्यथा, यथा च सत्यपि जलसेकादौ स्वकाल एव बीजादङ्कुरो निर्गच्छति न यदा कदा वा, एवमेवेहापि कर्मसंस्कारसाचिव्ये सत्यपि कञ्चित्कालं न व्यक्तो प्रपञ्चः स्वावसर एव तूपलभ्यत इति । अत्र पृच्छामः– येऽयं स्वकार्योन्मुखता संस्कारस्य, सा किं निमित्तेति? ननु स्वाभाविकीयं कर्मसंस्कारदोहदाविद्याबीजस्य प्रवृत्तिस्ततो नात्र हेतुरन्वेष्टव्यः । नैत-

देवम् । यस्मादविद्यामङ्गीकृत्यापि सर्वदा प्रपञ्चोपलम्भनमनुपलम्भनं वा प्रसज्यत इत्येतावदस्माभिरिह प्रदर्शितम् । न तु त्वयाद्यापि भावाविद्या प्रसाधिता तत्स्वभावो वा । तदेवं स्थिते -- अविद्यास्वभावोऽयं यः प्रपञ्चरूपेण परिणाम इत्यसिद्धमुपजीव्यासिद्धामविद्यां सुप्तौ साधयन्तं कथं नोपहसेयुः प्रमाणविचक्षणा इति । न च दृष्टत्वान्नासिद्धिः । त्वदभिमताविद्यायास्तत्परिणामस्य वा कुत्राप्यदृष्टत्वात् । तदेवं यदि भावाविद्याङ्गीक्रियते सुषुप्तौ, न तावन्मात्रेण जागरितप्रपञ्चोपलम्भनं सूपपाद भवति । तदर्थं तस्याः प्रपञ्चाकारेण परिणतिः स्वभाव इत्यप्यभ्यधिकमङ्गीकार्यं भवति । तन्निष्प्रमाणकद्वयकल्पनाद्वरं प्रपञ्चोपलम्भनस्यैवान्यथोपपादनमिति नोपेय भवति तदुपपादनार्थमपि सुषुप्तावज्ञानम् ॥

अपि च प्रपञ्चो नाम कार्यकारणसङ्घात इत्यपि वक्तुं शक्यते । न हि प्रपञ्चादन्यत्र कार्यकारणभावोऽस्तीति कल्पयितुं शक्यते मानाभावात् । न च कार्यकारणभावज्ञानमन्तरा प्रपञ्चपदार्थः शक्यविज्ञानः । सर्वत्रापि प्रपञ्चे तदुपलम्भात् । एवं स्थिते प्रपञ्चस्य केनचिदपि कारणेन भवितव्यमित्यङ्गीकार एवान्याय्यः । ततश्च प्रपञ्चोत्पत्तिकारणमज्ञानं सुषुप्तावङ्गीकार्यमिति नावकल्पते । यथा हि कालस्योत्पत्त्यर्थं प्राक्कालो नाङ्गीकार्यः देशस्योत्पत्त्यर्थं वा देशः, तथा कारणप्रत्ययानुगतस्य प्रपञ्चस्य कारणान्तरं नाकाङ्क्षितव्यम्, स्वात्माश्रयणादिप्रसङ्गात् । न च[1] कालाकाशादीनि नित्यानीत्यभ्युपगम्यन्ते वेदान्तिभिर्येन दृष्टान्तासिद्धिः शङ्क्येत । आत्मविवर्तत्वमिष्यते हि कालादीनाम् । ननु भावाज्ञानमपि प्रपञ्चान्तर्गतमेव । तेन यद्यपि कार्य-

१. एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् ॥—सू० भा०

सङ्घातरूपः प्रपञ्चः, तथापि प्रपञ्चान्तर्गतस्याज्ञानस्य तदन्यकारणत्वं न विरुद्धम् । यदिह्यज्ञानसहितस्य सकलस्य प्रपञ्चस्य कारणमन्विष्येत, तत उक्तोपालम्भः शोभेत । नत्वेदन्विष्यते, अतो यत्किञ्चिदेतदिति चेत् । नैतदेवम् । अज्ञानस्य प्रपञ्चान्तर्गतत्वे तस्यापि कारणापेक्षापत्तेः । न चानादित्वान्नापेक्षा, अज्ञानानादित्वस्य गगनारविन्दसौरभ्यतुल्यत्वमिति प्रागुपपादितत्वात् । तस्मात्प्रपञ्चोत्पत्त्यर्थं कारणाज्ञानमभ्युपगन्तव्यमिति निर्बन्धो व्यर्थः ॥

**४०. जागरितप्रपञ्चमिथ्यात्वाच्च तदुपलम्भोपपत्त्यर्थमज्ञानाङ्गीकारानवश्यकता :** अपरं च सुषुप्तौ यथा स्वप्नप्रपञ्चो विलीयते तथा जागरितप्रपञ्चोऽपीति स्थिते सुषुप्तिं त्यक्त्वा प्रपञ्चं पश्यतोऽयमेव जाग्रत्प्रपञ्च इति गमकं किमस्ति येनास्य मिथ्यास्वप्नविलक्षणत्वं प्रतिज्ञायेत ? प्रपञ्चितं च प्रागेव जागरितस्य व्यावर्तकधर्मो न विद्यते येनाऽयं स्वप्नाद्विविच्य ज्ञायेतेति । इत्थं स्वप्नजागरितप्रविवेको निरुपपत्तिको मिथ्याभूतस्वप्नतुल्यमेव तु जागरितं सर्वथेति फलितम् । तत्कथं नु मिथ्याकल्पितैर्जागरितवस्त्वाभासोपलम्भनैः सुषुप्ते भावाज्ञानं प्रमीयेत धूमाभासेनेव वह्निः ?

स्यादेतत् – न वयं जागरितप्रपञ्चोपलम्भनलिङ्गेन सौषुप्ताज्ञानं तत्कारणमनुमिनुमः । किं तु तदुपलम्भनान्यथानुपपत्तिः सुषुप्तेऽज्ञानं कल्पयतीति ब्रूमः । यथा हि शुक्त्यादौ रजताद्यर्थभानं तद्बाधश्च मिथ्यार्थावभासोपादानभूतमिथ्याज्ञानमन्तरा नोपपद्येते, प्रकृतेऽप्येवं जाग्रत्प्रपञ्चोपलम्भनमन्यथानुपपद्यमानं सत्सौषुप्ताज्ञानं तदुपादानमुपपादयतीति । तदेतदसारम्, मिथ्यावस्तुन उपादानादिकाङ्क्षाविरहात् । न हि कार्यकारणादिभावेन व्यवस्थितं वस्तु, अथ च मिथ्येत्युपपद्यते ।

स्फुटयिष्यते चेदमग्रे मिथ्यावभासनिरूपणे । तस्मात्सर्वथापि जागरिते प्रपञ्चप्रतीतिसिद्ध्यर्थं सुषुप्तावविद्या न स्वीकार्येति दिक् ॥

## जीवब्रह्मविभागसिद्ध्यर्थं न मूलाविद्या स्वीकार्या

४१. **सुषुप्तावपि जीवब्रह्मविभागः स्वीकरणीय इति पक्षः :** अत्राह -- यदेतदभिहितं जागरितस्य व्यावहारिकसत्त्व, स्वप्नस्य च प्रातिभासिकत्व नात्रास्माकमत्यन्तमाग्रहः, अधिकारिविशेषविषयत्वात् प्रक्रियाया. । अधिकारिभेदकल्पिता हि प्रक्रियाभेदाः शास्त्राचार्यैरनूद्यन्ते । तत्र केचित् स्थूलबुद्धयो मन्यन्ते जागरितस्य स्वप्नतोऽधिकसत्ता न्याय्येति, तदनुसारेणेदं व्यावहारिकप्रातिभासिकसत्ताभेदवचनम् । वस्तुतस्तु सर्वस्यापि दृश्यजातस्य स्वप्नवत् प्रातिभासिकसत्त्वमेवेति युक्तम्, दृष्टिसृष्टत्वात् । सुप्तप्रबुद्धदृष्टिरेव हि सृष्टिः, सुषुप्तेऽदृष्टिश्च लयः । तथा च श्रुतिः --'**एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः**' इत्यादिका । स्मृतिश्च -- **अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव । क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥** इत्यादि. । तस्मात् प्रातीतिकसत्त्वात् सर्वस्य द्वैतजातस्यापि, न न. किञ्चिच्छिद्यते स्वप्नजागरयोर्वैलक्षण्यासिद्धावपि । तथापि त्वा तत्त्वसाक्षात्कारं दृश्यानामुच्छेदाभावेन तेषां सुषुप्तावपि काचिदवस्था अवश्यं वाच्या भवति । अन्यथा हि--सुषुप्तौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रतिसुषुप्ति मुक्तिः, प्रबोधे पुनरावृत्तिश्चापद्येयाताम् । न चैतदिष्टम् । तस्मात् सुषुप्तावेव मुक्त्यभावाय जीवब्रह्मविभागः स्वीकरणीय. । किं च बौद्धान् प्रति प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वं सूत्रभाष्यादिषु प्रतिपादितम् । तेन च विरोधः स्याद्यदि येन केनापि

रूपेण विश्वस्थायित्वं नाङ्गीक्रियेत । अतस्तदविरोधाय च मूलाविद्यात्मना सुषुप्ते तस्य स्थितिरङ्गीकरणीया । अपि च जीवब्रह्मविभागस्य कार्यत्वे सुषुप्तौ तस्याभावाद्ब्रह्मण्येवाविद्यासाङ्कर्यं स्यात् । तस्मात् तत्परिहाराय विभागोऽनादिरिति, सुषुप्तौ च विद्यत एव जीवब्रह्मविभाग इति, स चाविद्यातन्त्र इति च कल्पनीयम् । यथा ह्यात्माविद्ययोः सम्बन्धोऽविद्यातन्त्रो नाविद्योपादानः, तथा विभागोऽपि भविष्यतीति ॥

४२. **जीवब्रह्मविभागो नाविद्यातन्त्रः** : तदेतदविचारसुन्दरम् । तथा हि– दृश्यानां तत्त्वसाक्षात्कारपर्यन्तमुच्छेदो न भवितुमर्हतीति तेषां काचनावस्था वाच्येति यदुक्तम्, तत्र कोऽभिप्रायः? किमुच्छेदो नाम वास्तविक एव नाश आहोस्वित् सम्यग्ज्ञानेन बाधः? नाद्यः, सर्वदृश्यजातस्य मिथ्यात्वाङ्गीकारात् । द्वितीये तु सर्ववस्तूनां प्रातीतिकं सत्त्वं स्वीकृत्यापि प्रतीतिव्यतिरिक्तस्थले काञ्चनावस्थामप्रतीतामपि सम्भावयतः कथं न व्याघातः? न चैवं वाच्यम्–दृष्टिसृष्टिरेव न मिथ्यात्वप्रयोजिका सर्वत्र । जीवब्रह्मविभागाद्यनादिषु दृश्यत्वादिकमन्यदेव तत्र हेतुर्भविष्यतीति । तथापि ह्यप्रतीतस्य जीवब्रह्मविभागस्य कल्पनं निष्प्रमाणकं व्यर्थं च स्यात् । ननु कथं निष्प्रमाणकं व्यर्थं वा? दर्शितं खलु प्रमाणं सुप्तप्रबोधस्यान्यथानुपपत्तिः । प्रयोजनं च क्षणिकमतप्रवेशनिवारणम् । मैवम्, दृष्टिसृष्ट्यभ्युपगमेन सुप्तप्रबोधकारणगवेषणे कारणाभावात् । स्वप्नवदेव सर्वं प्रतीयते न तु वास्तविकमिति ह्यभ्युपगम्यते । सुप्तप्रबोधोऽपि तथैव भविष्यति । नन्वेवमपि जगतः स्थायित्वं कथमुपपाद्यताम्? न कथमपि, वादेऽस्मिंस्तस्यानवकाशात् । आयातं तर्हि क्षणिकमतेन साङ्कर्यं भाष्यविरोधश्चेति चेत् । न । अनिष्टनिवारणाय त्वत्प्रक्रियैव निष्प्रमा-

णिकापि स्वीकार्येति राजशासनाभावात् । यथा त्वत्रोक्तविरोधाभावस्तथाग्रे दर्शयिष्यामः । ननु तथापि जीवब्रह्मविभागोऽविद्यातन्त्रोऽङ्गीकरणीय एव । अन्यथा हि ब्रह्मण्येवाविद्यासाङ्कर्यं स्यादिति चेत् । मैवम् । परस्पराश्रयप्रसङ्गात् । जीवस्य ब्रह्मण्यविद्येति विभागमपेक्ष्यैव ह्यविद्या स्वात्मानं लभते । तत्कथमविद्यातन्त्रो विभागः स्यात्? तस्यास्माद्भेद इत्यत्र भेदस्य भेदपुरस्सरत्ववदस्तु विभागपुरस्सराप्यविद्या विभागकल्पिकेति तु नोद्भाव्यम्, तत्राप्यसप्रतिपत्तेः । भेदस्य परस्परातिरेकत्वमन्तरेणासिद्धिरतिरेकत्वस्य भेदपुरस्सरत्वमिति परस्परसंश्रयो यथा, तथा अत्राप्यविद्याविभागयोरितरेतरसश्रयणस्य स्फुटत्वात् समानयोगक्षेमत्वमेवोभयोरपि पक्षयोः ॥

४३. **अनादिरविद्येत्यपि न सम्यक् :** ननु नैष दोषः प्रकृते, अविद्याविभागप्रवाहस्य बीजाङ्कुरवदनादित्वादिति चेत् । मैवम्, अनादित्वब्रह्मास्त्राश्रयणस्योत्तरापरिज्ञानमूलत्वात् । वस्तुतः कस्यचिदप्यनादित्वस्य दुरुपपादनीयत्वाच्च । उपदर्शितदृष्टान्तात् स्यादिति चेत् । तदपि नोचितम्, दृष्टान्तोदाहरणमात्रेण कस्यचिदप्यर्थस्यासिद्धेः । किं च दृष्टान्त प्रसाध्य ह्यनन्तरं तत्साम्यात् प्रकृते किञ्चिदतिदेष्टव्यं भवति, न च सम्भवत्यत्र दृष्टान्त । बीजस्याङ्कुरस्य वानादित्वं हि कदापि न दृष्टम् । नापि बीजतदङ्कुरव्यक्तिमन्तरेण बीजाङ्कुरसन्ततिर्नाम विद्यते क्वचित् । तस्माद्दृष्टान्तेनैव[1] न कस्यचिदप्यनादित्वम् । अथ स्यात्—अविद्यैवात्रानादिर्न पुनरविद्याविभागप्रवाहः । अविद्यातन्त्रो हि विभागोऽस्माकमिष्टः । अविद्यायाश्च सादित्वे तन्निमित्तस्याप्यपेक्षास्यान्निमित्तान्तरे, एवं तस्याप्यन्यापेक्षेत्यनवस्थानमेव पर्यवस्येत् । अविद्यो-

१. बीजाङ्कुराख्यो दृष्टान्त. सदा साध्यसमो हि स । —का०

च्छेदानपेक्षो निर्निमित्तश्च मोक्ष इति पक्षे तु मोक्षकथाप्रसङ्ग एव न स्यादिति – **जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥** इति प्राचां वचनमनुरुध्य मूलाविद्यायाः स्वरूपतोऽनादित्वमेव स्वीक्रियत इति चेत् । यद्येव-मुभयपक्षेऽपि दोषं पश्यति भवान्, भवत्वेवम् । भवत्कल्पितस्तु पक्षो निर्दूषण इति न सम्प्रतीमः । यस्मादादिरहिताविद्या नोच्छेत्तुमर्हती-त्यनिर्मोक्षप्रसङ्ग एवात्रापि स्यात् । न[1] ह्यनादिरथ चोच्छेदार्ह इति क्वचिद्दृष्टान्तोऽस्ति । ननु प्रागभावोऽनादिरप्यन्तवान् दृष्टो लोके प्रति-योगिजन्मना । यथा हि सौगतानां तत्त्वभावनाप्रचयेनानादिवासना-सन्तानाना निवृत्तिः, यथा वा तार्किकाणां मिथ्याज्ञानप्रवाहोऽनादि-रपि निवर्तते, यथा वा साङ्ख्याना विवेकेनानादेरप्यविवेकस्यान्तो भवति, मीमांसकाना च धर्मतत्त्वज्ञानप्रागभावनाशो यथा, तथा-नादिरपीयमविद्या विनश्येद्विद्योदयादूर्ध्वमिति । न, परतन्त्रदोषप्रदर्शन-मात्रेण स्वदोषानिवृत्ते । अनादित्ववादस्यैव चात्र विचारणीयत्वाद्दृ-ष्टान्तानुपपत्तिः । न च सर्वैरपि वादिभिरवश्यमाश्रयितव्यत्वाददोषतैव न्याय्यमस्येति विभावनीयम् । वेदान्तिनामनादिवादस्यानपेक्षणात् । यथा चानपेक्षा तथाग्रे स्फुटयिष्यते । प्रागभावदृष्टान्तस्तु नैवात्र सङ्गतः । अविद्यां खलु भावरूपां रोचयन्ते भवन्त । अभावस्य निर्विशेषत्वाच्चैतदेव[2] प्रतिपत्तव्यम् । न हि प्रागभावाद्यनन्तानभाव-विशेषान् कल्पयन्तोऽनुसर्तव्या भवन्ति तार्किका , तादृशाभावेषु स्वरू-

१ अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति ॥ —का०

(न ह्यनादिस्सन्नन्तवान् कश्चित्पदार्थो दृष्टो लोके) —का० भा०

२ निर्विशेषोऽप्यभाव. क्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते ॥ –तै० भा०

फलो लक्षणतो वा विशेषं[1] दर्शयितुमशक्यत्वात् । अपि चाभावस्यापि यद्युत्पत्तिविनाशादिभावधर्मता स्वीक्रियेत, तदा परिप्लवेतैव[2] भावाभावविभागसङ्कथेत्यहो जम्बुकाद्भीतस्य व्याघ्रमुखप्रवेशाध्यवसाय· । तस्मात् प्रागभाववदित्यदृष्टान्त· ॥

एतेनेदमपि परिहृतं भवति—न भावरूपिण्येवाविद्या वस्तुतः, शशशृङ्गादितुच्छव्यावृत्त्यर्थमेव तु तस्यां भावत्ववाचोयुक्ति· । तस्माद्भावाविद्याया अपि सद्वैलक्षण्यादेव प्रागभाववद्भाविनी निवृत्तिरिति । यदि हि सद्वैलक्षण्यान्निवृत्तिरित्युच्यये, तर्हि वक्तव्यमसद्वैलक्षण्यात्कस्मान्नभवेदनिवृत्तिरपीति । ननु ज्ञानेनाज्ञानं निवर्त्यत इति विशेषव्याप्ति· । अनादिर्न निवर्तेत इति च सामान्या । अतो भवेत् प्राबल्य भावाज्ञाननिवर्तकव्याप्तेरिति चेत् । मैवम्, अज्ञानत्वसिद्धौ ज्ञाननिवर्त्यत्वसिद्धिस्तत्सिद्धावेव चाज्ञानत्वसिद्धिरिति परस्परपिशाचिकावेशप्रसङ्गात् । न हि त्वदभिमतमज्ञानमद्यापि सिद्धमस्ति । न च मिथ्याज्ञानादीनि न सन्त्युभयसिद्धान्यज्ञानपदभाञ्जि, यान्यार्जवेनैव भजेरन्विशेषव्याप्तेर्विषयताम् । तस्मात्त्वदभ्यूहिताविद्याया अनिर्मोक्षस्तदवस्थ एव । तस्मादविद्याया अनादित्वासम्भवात्परस्पराश्रयदोषः सुस्थ एवेति नाविद्यातन्त्रो जीवब्रह्मविभागः सिध्यतीति ॥

**४४. विभागस्य सुषुप्तावपि स्वीकारे तस्य मिथ्यासत्त्वं न सम्भवति :** यत्पुनः सुषुप्तावपि विभागसिद्ध्यर्थमविद्या कल्प्यत

१ एकस्याभावो द्वयोरभाव सर्वस्याभाव प्रागभाव· प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्य ॥—गी० भा०

२. नह्यभाव उत्पलादिवद्विशेषणसहभावी । विशेषणवत्त्वे भाव एव स्यात् ॥　—तै० भा०

इति, तद्दिष्टहतस्य दुष्टव्याघ्रस्योत्थापनार्थं सञ्जीवनमन्त्रः पुरश्चर्यते । यतो विभाग एव बन्ध इति कृत्वा मुमुक्षुर्यतते तद्विस्रसनाय । स च विभागः सुषुप्तौ न केनाप्यनुभूतचरो नापीच्छति कश्चित्तदनुभवं निद्रायामपि जाग्रति यथा, तस्यानिष्टरूपत्वात् । तस्यास्य विभागस्य सिद्धिं किं पुरुषार्थं लिप्सवः केन वा लिङ्गेनानुमास्यन्ति भवन्तः ? यदा हि सुषुप्तावपि विभागस्यानुवर्तनम्, तदा विभागस्यार्थगतत्वमेवायास्यति न तु मिथ्याविद्यमानतेति दूरनिरस्ता ततो विनिर्मोक्षप्रत्याशा ॥

ननु कथमर्थगतो विभागः ? अविद्यातन्त्रः खल्विष्यतेऽस्माभिः सः । अविद्यासम्बन्धवच्च विभागस्याप्यविद्याविशिष्टाश्रयत्वं न दोषाय भवतीति चेत् । न, विभागस्याविद्यातन्त्रत्वमविद्यायाश्च विभागपुरस्सरत्वमित्यन्योन्याश्रयः स एव खलु दुरात्मा पूर्वोक्त आवर्तते । किं चेदमुच्यतेऽविद्यासम्बन्धवदिति सिद्धवत्कृत्य ? सिद्धे हि तादृशसम्बन्धे घटेत दृष्टान्तः । भवदभिमता चाविद्या नाद्यापि प्रसाधिता, कुतः पुनस्तस्या आत्मसम्बन्धसङ्कथेति । अविद्यासम्बन्धश्च तात्त्विको वा स्यान्मिथ्या वा ? यदि तात्त्विकस्तर्हि नैव मुच्येतात्मा तत्सम्बन्धादित्यनिष्टं कल्पितं स्यात् । अथ मिथ्या स इति । तत्कुतोऽवसीयत इति वक्तव्यम् । संसार्यसंसारिसाधारणेयमविद्या न कमप्यामरणं मोचयतीति ह्युक्तं भवद्भिः ॥

ननु जीवन्मुक्तो नाविद्याग्रस्तः, किं तु तत्संस्कारमात्रशेषः प्रपञ्चं पश्यतीत्युपदिष्टमस्माभिः । नेत्युच्यते । प्रपञ्चप्रतिभासस्य यद्यविद्या कारणं, तदा संस्कारशब्दाभिलप्याप्यविद्यैव भवति नान्येति नामान्तरग्रहणमात्रेण को वा लाभः स्यात् ? अथोच्येत – अविद्यासंस्कारः स्थूलाविद्यावन्न जन्मान्तरदायी, किं तर्हि प्रारब्धफलोप-

भोगेनैवोपक्षीयते । तस्मान्न दोष इति चेत् । तच्च न, प्रमाणाभावात् । न[1] ह्यस्ति प्रमाणमविद्यानाशानन्तरमपि तत्संस्कारः कञ्चित्कालं तिष्ठति, तत्त्वानुसन्धानाच्च प्रक्षीयत इति । यदा च कृतवेदान्तश्रवणानामप्यनुवर्तते तत्त्वज्ञानिनामपि सतामविद्यासंस्कारः, तत इदं भवति – नाविद्यातत्कार्यप्रध्वंसाय तत्त्वज्ञानमेषितव्यं तत्सूतेरनन्तरमपि निरवशेषतस्तदनपायात्, अपि तु कारणान्तरमेव संसारनिवर्तकमिति। अतो नास्ति भवन्मतेऽविद्यासम्बन्धो मिथ्यारूपः । सत्यसम्बन्धस्तु नेष्यते ॥

तदित्थमुभयथापि सम्बन्धासिद्धया त सम्बन्धं दृष्टान्तीकृत्य जीवब्रह्मविभागमविद्यातन्त्रमेष्टुं न शक्यते । तथा चार्थगत एव स्याद्विभागः स चानिष्ट इति । तस्मान्न जीवब्रह्मविभागसिद्धयर्थमपि स्वापे भावाविद्या स्वीकार्येति स्थितमेतत् ॥

## सुषुप्तौ स्वरूपानवभासव्यवहारतोऽपि न भावाज्ञानसिद्धिः

**४५. आत्मा नास्ति न प्रकाशते इति व्यवहारान्यथानुपपत्तिः कारणाविद्यायां प्रमाणमिति पक्षानुवादः :** अथास्त्वपरः पक्षः – सुषुप्तिगताविद्या न सती, विद्यया तस्या अपसारात् । नाप्यसती, प्राग्विद्याप्राप्ति तदनुभवस्य दुरपह्नवत्वात् । नात्मनो भिन्ना, स्वतो निरूपणार्हस्य स्वरूपस्याभावात् । नाप्यभिन्ना, चैतन्यस्वरूपस्यात्मन आवरकत्वात् । एवं सदसदादिरूपेण निर्वक्तुमशक्या

१. कामहेतौ हि विध्वस्ते न कश्चिदवशिष्यते ।
संस्कारोऽथवाप्यन्यः सर्वस्याज्ञानमूलत ॥ —वा॰

कारणाविद्या कथं त्वदुक्तं विकल्प सहेत? न चैवं निर्वचनाभावे भावत्वमेव तस्या नावकल्पेतेति चोदनीयम्, भावानवबोधात् । अज्ञानस्य हि भावत्व न परमार्थसत्त्वं किन्त्वभाववैलक्षण्यमेव विवक्षितम् । तदेव सदसदादिरूपेणानिर्वचनीयाविद्या । तस्याः सत्त्वं यद्यपि नानुभूयते । यद्यपि स्वप्नप्रपञ्चाविशेषाज्जागरितप्रपञ्चोऽपि मिथ्यैव, तथा च न तद्धितानार्थं कारणाविद्यानुमानं श्लक्ष्णम् । यद्यपि सुषुप्तिः सनिमित्तत्वर्निमित्तात्वादिविकल्पं न सहते । यद्यपि च स्वापे निर्विषयानुभवो विद्यत एव सार्वजनीनः । किं बहुना, यद्यपि सर्वविधविकल्पासहा कारणाविद्या, तथापि सुषुप्तौ स्वयंज्योतीरूपस्यात्मनोऽनवभासव्यवहारान्यथानवक्लृप्त्या साङ्गीकार्यैव भवति । सुषुप्तौ हि न भासते ममात्मेति व्यवहरति लोकः । स चानवभासो न मिथ्याज्ञानात्, तस्य तत्राभावात् । नाप्यग्रहणात्, कादाचित्कस्य तस्य स्वरूपानवभासकत्वायोगात् । नापि मिथ्याज्ञानसस्कारात् । सस्काराणा तथा प्रतिबन्धकत्वे प्रमाणाभावात् । तस्मान्नास्ति न प्रकाशत इति व्यवहारान्यथानुपपत्तिः कारणाविद्यां कल्पयतीति न किञ्चिदपहीनमिति ॥

**४६. सुषुप्तिविषयकजाग्रद्व्यवहारान्न सौषुप्ताज्ञानसिद्धिः :**

अत्रोच्यते--नास्ति ममात्मेति तावन्न कदापि व्यवहारो भवति । न हि कस्यचिदपि भवति प्रत्ययो नाहमस्मीति । न प्रकाशत इति तु देहादि रूपेण गृहीते आत्मनि भासमाने एव वेदान्तोदितस्वरूपेणाभासमानत्वादज्ञानकृतो व्यवहारः । स च व्यवहारः प्रबोधे भवति न तु सुषुप्ताविति कथं तादृशव्यवहारादज्ञानं सिध्येत सुषुप्तौ? व्यवहारस्य ह्यभिज्ञाभिवदनमुपादानमर्थक्रियेति चातुर्विध्यमङ्गीक्रियते । चतुर्विधोऽप्ययं व्यवहारो जागरिते स्वप्ने वा सम्भवति । न त्वन्य-

तमस्याप्यस्य व्यवहारप्रकारस्य सम्भवोऽस्ति सुषुप्ते । तस्मान्न दृष्टार्थापत्त्या प्रमीयते सौषुप्ताज्ञानम् ॥

ननु तथापि जागरितव्यवहारान्यथानुपपत्त्यैव स्वीकार्यं भवति तादृशाज्ञानम् । सुषुप्तिविषय एव हि व्यवहारः प्रचलति जागरे — मम सुषुप्तौ नात्मा प्रकाशते स्मेति । व्यवहारश्चायं स्मृतिरूप इति भावाज्ञानानुभवोऽनुमीयताम् । न, अन्याय्यत्वात् । अन्याय्यं हि भवत्यवस्थान्तरगतस्मृतेरवस्थान्तरगतानुभवानुमानम्, माभूदभ्रान्तयोर्व्यधिकरणयोरनुभवयोरेकतरेणापरनिराकरणस्यापि न्याय्यत्वमिति । यथा हि कश्चिदनुमिमीते — यत इदानीमहं क्षुत्क्षामकण्ठस्ततो नाहमभुञ्जि तदात्वे किञ्चिदपीति, तद्वदेवायमवस्थान्तरानुभवमाश्रित्य सुषुप्तिस्वरूपनिश्चयोऽपीति । ननु विषम उपन्यासः । नाहमभुञ्जीति स्मरणमतीतकालविषयकं नास्ति दृष्टान्ते । प्रकृते तु सुषुप्तिविषयकमेव विद्यते स्मृतिर्नाहमात्मानमद्राक्षं सुषुप्त इति । तन्न्याय्यमेवानुमानमिति पश्याम । नैतत्साधु, जाग्रदाश्रयस्य सुषुप्तिविषयकपरामर्शस्य स्मृतित्वे बाधकयुक्तेरुक्तत्वात्, स्मृतेरनुभवानुमानमन्याय्यमिति पूर्वमेव प्रसाधितत्वाच्च ॥

**४७. भावरूपाज्ञाने नास्त्येवानुमानं क्वचिदपि, कुतः सुषुप्तौ?:** अपि च दृष्टमेव हि तज्जातीये व्यक्त्यन्तरेऽनुमीयेत न तु जातुचिदपि सुषुप्तौ भावाज्ञानं दृष्टचरम् । अवस्थासाम्यात् स्वप्नादिषु दृष्टमिति हेतोरेवाश्रयणाद्यद्यनुमीयेत, तदा तत्साम्यात् सप्रपञ्चत्वमपि किं नानुमिमीथा? न चास्ति दृष्टं भावाज्ञानं स्वप्नजागरयोरपि, प्रत्यक्षस्यान्यथैवोपपादितत्त्वात् । ननु सुषुप्तिविषयकस्मरणोपपत्त्यर्थं सामान्यतोऽनुमितस्य भावरूपाज्ञानलक्षणविशेषे पर्यवसानं भविष्यत्यतो दृष्टमेवानुमेयमित्यनुपपन्नो निर्बन्धः । किं च — विवादाध्यासितं

प्रमातृविशेषनिष्ठं प्रमाणज्ञानं तन्निष्ठप्रमाभावाद्यतिरिक्तानादेर्निवर्तकं भवितुमर्हति । प्रमाणत्वात् तदन्यप्रमातृविशेषनिष्ठप्रमाणज्ञानवत् । न च दृष्टान्तेऽप्यप्रसिद्धं साध्यम् । चैत्रनिष्ठं हि प्रमाणं मैत्रनिष्ठप्रमाभावाद्यतिरिक्तस्य तत्प्रागभावस्य निवर्तकमिति सुप्रसिद्धम् । मैत्रनिष्ठं तु प्रमाणं न तन्निष्ठप्रमाभावाद्यतिरिक्तस्य कस्यचित्प्रागभावस्यानादेर्निवर्तकमिति, तत्र प्रमाणत्वनिर्वाहायावश्यं स्वीकार्यं भवत्यनादिज्ञाननिवर्त्यं किञ्चित्। तदेवं सामान्यतोऽनुमितमेव भवत्वभिमताज्ञानमिति चेत् । मैवम्, स्मरणस्यान्यथैवोपपादितत्त्वात्तदुपपत्त्यर्थं सामान्यतोऽनुमित्यनुदयात् । यत्तु रचनमनुमानस्य प्रमातृविशेषनिष्ठं प्रमाणज्ञानमित्यादि, तत्र प्रष्टव्यो भवान्—प्रमात्रन्तरनिष्ठं प्रमाणमभावाद्यनिवर्तकमिति कुतो निरणायीति । ननु नाहं तत्प्रमाणज्ञानमभावाद्यनिवर्तकमिति निर्णेतुं प्रवृत्तः, किं तु विवादाध्यासितप्रमातृविशेषनिष्ठप्रमाभावाद्यतिरिक्तानादेर्निवर्तकमिति । स चानादिः प्रागभावरूप इत्युभयसम्मत इति चेत् । न, तत्राप्यभावादित्रिकस्यैव निवर्त्यत्वदर्शनात् । न हि प्रमात्रन्तरे अभावादिव्यतिरिक्तमनादिं दर्शयति भवान् । ननु तथापि चैत्रनिष्ठप्रमाणेन निवर्त्यं मैत्रनिष्ठाभावादिव्यतिरिक्तम् । मैत्रे तु तदेव साध्यत इति किमत्रापहीनम्? नैतदेवम्, मैत्रप्रमाणस्यापि मैत्रनिष्ठप्रमाभावादिनिवर्तकत्वेनैव चारितार्थ्यसम्भवात्, चैत्रनिष्ठस्य स्वनिष्ठतदभावादिनिवर्तकत्वेनैव यथा । यदि हि मैत्रनिष्ठस्य प्रमाणस्य दृष्टं निवर्त्यमेव न समभविष्यत्, तदा प्रमाणस्य प्रमाणत्वनिर्वाहायादृष्टमपि किञ्चिदकल्पयिष्यत । न त्वेवं न सम्भवति । चैत्रे मैत्रनिष्ठातिरिक्तनिवर्तकत्वं तु चैत्रस्य मैत्रातिरिक्तत्वात्, न पुनः सर्वत्र प्रमाणस्य मैत्रनिष्ठप्रमाभावाद्यतिरिक्तनिवर्त्यापेक्षणादिति न किञ्चिदत्र चित्रम् । अपि चाभ्युपगम्यापि मैत्रनिष्ठप्रागभावाद्यतिरिक्तं प्रष्टव्योऽसि — कथमध्यवसितोऽसि तस्य भावत्वमिति । न

तावज्ज्ञाननिवर्त्यत्वात् , प्रागभावस्यापि निवर्त्यत्वेन त्वयैवात्रोदाहरणात् । नापि परिशेषात्, भावाज्ञानस्य प्रमाणान्तरेणासिद्धत्वात् । एतेन यदाहुः -- विवादपदमनादेर्भावस्य न निवर्तकं पदार्थत्वात्सम्मतवदिति प्रत्यनुमानं न भवति, आनादेरभावातिरिक्तस्य सम्प्रतिपन्नातिरिक्तस्य प्रतिवादिनोऽप्रसिद्धत्वादिति । तदप्यनवकाशीकृतम् । ज्ञानाभावादिनिवर्तनमेव प्रमाणज्ञानकृत्यमित्यङ्गीकारात् । तस्माद्यावन्नोपपाद्यते प्रसिद्धप्रमाप्रागभावादिनिवर्तकत्वेनैव प्रमाणत्वं न सेत्स्यतीति, तावदज्ञानानुमानं न समीचीनं भवति । अपि च -- घटोऽयमेतद्घटप्रागभावव्यतिरिक्तानादेर्निवर्तको घटत्वाद्घटान्तरवदित्यनुमानेन किं तन्निवर्त्यो भावपदार्थः सिध्यति ? न चेदत्र को विशेषः ? उक्तश्च अविद्याया आनादित्वेऽभावस्य प्रागभावादिविभागवत्त्वे च दोष ॥

यदप्यनुमानम् -- विगीतो विभ्रम एनज्ज्ञानकारणाबाध्यातिरिक्तोपादानः, विभ्रमत्वात्, देवदत्तादिविभ्रमवदिति । तत्राप्यतिरिक्तत्वमेवान्यथोपपादनीयम् । आभाससाम्यं चानुमानस्य दर्शयितु सुशकं पूर्ववत् । तस्माद्विभ्रमोपादानत्वेनापि न भावाज्ञनसिद्धिः ॥

अस्तु तर्हीदमनुमानम् -- विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । मैवम्-अन्धकारस्याप्यभावत्वस्य शक्योपपादनत्वात् । प्रकाशकत्वस्य चोभयसाधारणस्य निरूपणानर्हत्वात् । यत्तु प्रकाशकत्वं प्रकाशकपदवाच्यत्वं साधारणमिति, तदतीवोपहास्यम् । अयं मदीयदारिद्र्यापनोदनसामर्थ्यवान् कुबेरत्वात् अलकाधिपतिवत् -- इत्यनुमानस्यापि समीचीनत्वापत्तेः । न च प्रकाशकशब्देन शास्त्रे सर्वदेशकालयोर्वा व्यवह्रियमाणत्वं

विवक्षितमित्यदोषः । परिभाषामात्रेण सिद्धस्य नदीत्वादेरपि समीचीनानुमानहेतुत्वप्रसक्तेः । दारुहस्तिनोऽपि सर्वदेशकालयोर्हस्तित्वेन व्यवह्रियमाणस्य तथात्वापत्तेश्च । तस्मादप्रकाशितार्थप्रकाशकत्वादिति न साधुर्हेतु । मिथ्याप्रतीतिमात्रशरीरत्वाद्वा तमसः प्रमाणज्ञानस्य मिथ्याज्ञाननिवर्तकत्वमप्यस्तु, नत्वेतेन मिषेण भावाज्ञानस्यावकाश. सम्भवति । यत्तूच्यते मिथ्याज्ञानविषयस्य तत्कालमात्रसत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभाव इति । तत्परिभाषामात्रसिद्धतादृशानिर्वचनीयानभ्युपगमादेव निरसनीयम् । निरसिष्यते चेद मिथ्यावस्तुप्रतिभासपरीक्षणावसर इत्यनवद्यम् । तदेवं ज्ञानाभावादित्रितयं वा तदन्यतममेव वा यथासम्भव सम्भवति प्रमाणनिवर्त्यम् । स्फुटीकरिष्यते च यथा चैतत्तथा । तस्मादेतदप्यननुमानम् ॥

तदेवं नास्ति सामान्यतोऽप्यनुमानं कुतो विशेषे पर्यवसानम्, कुतस्तरां च जाग्रत्स्मरणोपपत्त्यर्थं सुषुप्ते तत्सिद्धिः? तस्मान्नास्ति जाग्रद्व्यवहारतोऽपि सुषुप्तेऽनवभासः, तत्सिद्ध्यर्थं वा सुषुप्ते भावाज्ञानसिद्धिरिति सिद्धम् ॥

**४८. सौषुप्तानुभवविरुद्धा भावाज्ञानसाधिका युक्तिः :**

अपरं च--सुषुप्तौ भावाज्ञानमन्यद्वा किञ्चिन्नास्तीत्येवमनुभवः, किञ्चिदपि नास्तीति न युज्यते जाग्रत्स्मरणान्यथानुपपत्तेरिति युक्तिः । न च शङ्किताप्रतिष्ठानकलङ्कया युक्त्याऽव्यभिचारिण्यनुभूतिर्बाधयितुं योग्या । न हि व्यवहारे प्रामाणिकत्वेनावगतमपि[1] वस्तु कया-

[1] प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवाववधार्येते न पुन. सम्भवासम्भवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती ॥ —सू० भा०

चिद्युक्त्या प्रत्याख्यानमर्हति । किं पुनर्वक्तव्यं यदर्थं प्रमाणगवेषणं सर्वत्र तं यथार्थानुभवं तर्केण नान्यथयितुमौपयिकमिति । तस्मादपि नाज्ञानसिद्धिः ॥

**४९. सुषुप्तौ कस्मान्न भवति स्वात्मविज्ञानम्?** : किं च कारणं सुषुप्ते नात्मज्ञानं सम्भवतीति प्रविवेक्तव्यमस्ति । किमज्ञानसत्त्वादेवात्मज्ञानं नोदेत्युत ज्ञानकारणाभावादाहोस्वित् कारणान्तरादेवेति । कश्चात्र विशेषः? यद्यज्ञानसत्त्वात्ततो नोदीयादेव ज्ञानं कदापि, सर्वस्यापि विमुक्तिपर्यन्तमज्ञानित्वाभ्युपगमादज्ञानस्य च ज्ञानप्रतिबन्धकत्वात् । अथ करणाभावात्, तदा मुक्तस्यापि सर्वकार्यकरणवियोगादात्मज्ञानानुपपत्तिः । न च कारणान्तरमुपलभेमहि । तस्माज्ज्ञानाभावः किं निमित्तक इति विचार्यमेतत् ॥

ननु ज्ञानोपदेशपर्यन्तं न कस्यचिज्ज्ञानोदयः । ततश्च नोक्तशङ्कावतार इति । तर्हि ज्ञानोपदेशस्याभाव एव हेतुर्नाज्ञानादिकमित्युक्तं भवति । तच्च न्यायविरुद्धम्, अभावादपि भावकार्यजन्मप्रसङ्गात् । नन्वभावो न हेतुः, किं तर्हि तद्विशिष्टमज्ञानमेव । मैवम् । सुषुप्तौ ज्ञानोपदेशस्यैवानवकाशात् । तस्मात्सर्वथा नोपदेशाभावः कारणं सुषुप्ते ज्ञानानुदये ॥

एवं तर्हि करणाभावादनुदय इति वदामः । जाग्रति हि विद्यन्ते ज्ञानसाधनभूतान्यतःकरणादीनि । तेषामभावाच्च सुप्तौ नोपजायते ज्ञानमिति श्लिष्यते । नैतद्युक्तमिव । तथा सति हि बीजरूपेणापि करणसम्बन्धरहितस्य कैवल्यमनुभवतः सुतरां न घटते ज्ञानम् । ज्ञानिन एव तु मुक्तत्वं प्रतिज्ञायते । ननु विद्यन्त एव जीवन्मुक्तस्यापि करणानि? बाढम्, तस्य तु न मुख्यवृत्त्या मुक्तत्व-

मङ्गीक्रियते भवद्भिः । विदेहकालीन एव मुख्यो मोक्ष इति किलास्थीयते । तस्मिंस्तु मोक्षे वियुक्तकरणस्य ज्ञानाभावो न निवार्यो भवति । इष्टापत्तिरिति चेत् । ज्ञानं विनापि मुक्त्यभ्युपगमप्रसङ्गः । ननु—ज्ञातत्त्वमुपलक्षणमेव मुक्तात्मनः । मुक्तः खलु प्रागपि विज्ञातो विज्ञात एव भवति । न हि लोके पचनलवनादिक्रियायामतिवृत्तायां देवदत्तः पाचको लावको वा न भवति, न वा तथा न व्यवह्रियते । एवमिहापीति चेत् । मैवम्, जीवन्मुक्तस्य विदेहकैवल्यस्वरूपानुभवाभावात् तदनुपपत्तेः । अथाभिलप्येत—भाविकत्वाज्ज्ञानापेक्षा नास्ति कैवल्यस्य । यथाह्यग्निरुष्ण एव भवति नानुष्णः, तथा मुक्तेर्वस्तुसद्धर्मत्वादनपेक्ष्यापि ज्ञानं तथात्वमिष्यत इति । तर्हीदानीमपि तथैवास्त्विति किमर्थं ज्ञानोपदेश एष्टव्यः? स्यादेतत्—मुमुक्षोरेव ज्ञानापेक्षा न मुक्तस्य । यस्मात्स्वयंप्रकाशत्वादात्मनो नान्यापेक्षा विद्यते स्वप्रतिभासाय । अज्ञानादेव केवलमाख्यायते न ख्यात्यात्मा ज्ञानं विनेति । वस्तुतो नात्मानं न वेत्त्यात्मा जातुचित्, नित्यबोधस्वरूपत्वादिति । हन्त तर्हि स्वापेऽपि तथैव भवत्विति कृतं कारणान्तरगवेषणेनेति ॥

ननु सुषुप्तौ न विद्यतेऽहमस्मि नित्यबोधस्वरूप आत्मेति विशेषविज्ञानोदयः । तादृशमेव तु विज्ञानमात्मज्ञानशब्दाभिलप्यम् । तद्विनाश्यमेव चाज्ञानमित्यभ्युपेमो वयम् । ततश्च तादृशज्ञानानुदयान्यथानुपपत्त्या मूलाज्ञानमनुमिमीमह इति चेत् । हन्त तर्हि वितनुमुक्तस्यापि तुल्ययोगक्षेमतया तदनुदयतादवस्थ्याद्घट्टकुटीप्रभातवृत्तान्तानुहरणम् । अपि च -- विशेषविज्ञानस्य द्वैतनिबन्धनत्वात्, स्वापे च द्वैताभावात्, कथमुद्भवेदात्मानुभवोऽहमात्मेदृश इति, यत्र सर्वप्रकारस्यापि विशेषानुभवस्य व्यासेधः? न हि जातुचिन्मूढोऽपि सुषुप्तौ यं

कश्चिद्विशेषानुभवं प्रतीक्षते। तस्मादेतदपि न विचारचारु यद्विशेषत-आत्मानुभवाभावान्यथानुपपत्त्या मूलाज्ञानप्रकल्पनमिति ॥

तदित्थं सुषुप्तौ ज्ञानासम्भवस्य न शक्यते हेतुरुपपादयितुं प्रतिवादिना। तस्मादपि तद्बलान्नाज्ञानसिद्धिरिति सिद्धम् ॥

## विद्याविधानान्यथानुपपत्त्या नाज्ञानसिद्धिः

**५०. विद्योपदेशश्रुत्यर्थापत्तिर्भावाज्ञाने प्रमाणमिति पक्षः :** स्यादेतत् – '**ज्ञानादेव तु कैवल्यम्**' '**ब्रह्मविदाप्नोति परम्**' '**तमेव विदित्वाऽतिमृत्युमेति**' – इत्यादिश्रुतिभिर्विद्या विधीयते मोक्षाय। तत्कथञ्चन नोपपद्यते तस्य यस्य पक्षे विद्यापनोद्या भावाविद्या नाभ्युपगम्यते। असत्या हि तस्यां दण्डायमानायामवस्थात्रयेऽपि, कस्य संसारित्वं स्यात्, यत्कृते विद्योपदेश आञ्जसः परिकल्प्येत? तस्माद्यस्या एव प्रहाणाय विद्योपदेशः, सा भावरूपाविद्यावश्यमभ्युपेयेति ॥

**५१. विद्योपदेशोऽन्यथैवोपपादनीयः :** अत्रेदं चिन्तनीयम् -- विद्योपदेशोपपादनार्थं किमिति भावाविद्या स्वीकार्येति। न ह्यभीष्टसिद्धिनिबन्धना वस्तुसिद्धिः। यदि खलु स्वतोऽविद्या नास्त्येव, तर्हि विद्योपदेशतोऽपि सा सेद्धुं कथमपि नार्हति। तस्मादयुक्तमिदमुच्यते – विद्योपदेशेन सार्थकेन भाव्यम्, ततो भावाविद्यासद्भावोऽङ्गीकार्य इति। तथाप्यभ्युपगम्य ब्रूमः – सुषुप्तौ तावन्न कदापि विद्योपदेशः सम्भवति। तथा च तदपनोद्यमज्ञानं नावश्यकमभ्युपगन्तुम्। यत्र तु जागरितेऽस्ति विद्योपदेशः, तत्र श्रुतार्थापत्त्या प्रमिताया अविद्यायाः पुरस्ताद्दर्शितनीत्या न ज्ञानाभावाद्यतिरिक्तत्व-

मस्ति । दर्शितं हि प्राग्यद्यत्परो भावाविद्यालिङ्गत्वेनोद्भावयति तत्सर्वं मिथ्याज्ञानज्ञानाभावसंशयज्ञानान्यतमविषयमेवेति ॥

५२. **ज्ञानाभावादिरूपाज्ञानस्य ज्ञानपरिहार्यत्वे शङ्का :** ननु कथमन्यतमविषयम्? ज्ञानापनोद्यमेव हि श्रुतार्थापत्त्या किञ्चिदावरण प्रकल्पते । तत्र ज्ञानाभावादित्रिकस्य नोक्ताविद्यारूपत्वम् । यतस्तेषामन्यतमस्यापि ज्ञानापनोद्यत्व न सम्भवति । किं कारणम्? ज्ञानापनोद्यत्वं हि नाम नियमेन तद्बाध्यत्वम् । अन्यथोत्तरज्ञानापनोद्यस्य पूर्वज्ञानस्याप्यज्ञानत्वप्रसङ्गः । न हि पूर्वं ज्ञानं नियमेन ज्ञानापनोद्यं भवति । तथा संशयविपरीतज्ञानयोरपि नास्ति नियमेन ज्ञानापनोद्यत्वम् । संशयस्य कदाचिद्विपरीतनिश्चयात्, तादृशनिश्चयस्य च पुनः कुतश्चिद्धेतो· संशयादेव निवृत्तौ बाधकाभावाच्च । ज्ञानत्वाधिकरणत्वाच्चानयोरज्ञानशब्दव्यपदेश्यत्वं न सम्भवति ॥

एवमेव ज्ञानाभावस्यापि न सम्भवति नियमेन ज्ञानापनोद्यत्वम्, संशयविपर्ययान्यतरेणैव तदपनोदनसम्भवात् । अभावत्वादेवास्य नावरकत्वम्, ततश्च नाञ्जसमस्य ज्ञानापनोद्यत्वमित्यपि मन्तव्यम् । अपि च प्रतियोग्युत्पत्तिमात्रविरोधिनो ज्ञानाभावस्य न ज्ञानापनोद्यत्वमवकल्पते । यावद्धि ज्ञानमपनोदकत्वेन पदं लभते तावदपनोद्यमेव नास्तीति किमस्ति तत्रापनोद्यं येन कल्प्येतापनोद्यापनोदकभाव· ? न चैवं भावाज्ञानस्यापि ज्ञानोत्पत्तिमात्रेण विनाशाङ्गीकारात्तत्रापि न व्याप्नुयाल्लक्षणमिति शङ्क्यम्, ज्ञानोत्पत्त्यनन्तरं विलम्बं न सहत इत्यभिप्रायकत्वाज्ज्ञानसमकालविनाश्यत्ववाचोयुक्तेः ॥

इतश्चैतदेवं प्रतिपत्तव्यम् — ज्ञानाभावो यद्यज्ञानम्, ततो ज्ञानं कीदृशमिति प्रविवेक्तव्यं भवति । न तावच्चैतन्यम्, तस्याभावप्रतियोगि-

त्वासम्भवात्। नाप्यन्तःकरणवृत्तिरूपं तत्। तथा हि सत्यौपचारिकमेव ज्ञानं स्यादित्यज्ञानशब्दो न मुख्यवृत्तो भवेत्। अस्तु वा कथंचिन्मुख्यत्वमपि। तथापि ज्ञानाभावशब्देन तदुपादानभूतबुद्धिस्वरूपेणावस्थानमेवाभिलप्येत। ततश्च नाभावत्वं तस्य भवेत्। अथ मन्यसे—चैतन्यवृत्त्युभयव्यतिरिक्तमेव ज्ञानमात्मगुण इति। तत्र प्रष्टव्योऽसि —किं ज्ञानविशेषस्य कस्यचिदभावो वाज्ञानमुत ज्ञानसामान्याभावो वेति। न तावद्विशेषाभावः, 'मूढोऽहं न किञ्चिज्जानामी'ति सामान्याकारज्ञानस्यानुभूयमानत्वात्। ननु कल्प्यतां तत्राप्यनुभवे विशेषपर्यवसायित्वम्? न वयमुत्सहामहे तथा कल्पयितुम्, असत्यपि बाधके सामान्यबुद्धेर्विशेषविषयत्वकल्पनाया सामान्यबुद्धेरेव विलोपप्रसङ्गात्। न चेष्टापत्तिः, विषयसामान्याभावाधिकरणायाः सुषुप्तेरेवासिद्धिप्रसङ्गात्। सत्यपि घटादिविषयविशेषे तत्सामान्यनिषेधस्यापि समीचीनत्वापाताच्च। तस्मान्न विशेषाभावोऽज्ञानम्। अस्तु तर्हि ज्ञानसामान्याभाव एव तदिति। न, धर्मिप्रतियोगिनोर्ज्ञातयोरज्ञातयोर्वा तादृशाभावस्य दुर्ज्ञानत्वात्। अथ स्यादनुपलब्धिरेवाभावं गमयतीति। तदप्यसत्, अनुपलब्धेरेवोक्तरीत्या प्रतियोगिधर्मिज्ञानसापेक्षाया असम्भवात्। तस्मान्न ज्ञानाभाव एवाज्ञानं, किं तर्हि भावान्तरमेवेति॥

**५३. भावाज्ञाने ज्ञानापनोद्यत्वं सुतरां न सम्भवति**

अत्र वयं पृच्छामः — किमपनोदशब्देनात्यन्तिकलयो विवक्ष्यते, किं वा शक्तिरूपेणावस्थानम्। यदि पूर्वः कल्पः, तर्हि किमपराद्धं ज्ञानाभावादिभिः? न हि सति ज्ञाने तेषामनुपमर्दः। न चास्मिन्पक्षे भावाज्ञानस्य ज्ञानापनोद्यत्वं सम्भवि। अभ्युपगम्यते हि ज्ञानजनेरूर्ध्वमपि तस्य सत्त्वं जीवन्मुक्तेषु। अथैतद्दोषमिमार्जयिषया

द्वितीयः कल्प्यते, तदा ज्ञानापनुन्नेनापि सद्वितीयत्वमात्मन इत्यद्वैतसिद्धान्तहानप्रसङ्गः, ज्ञानव्यतिरिक्तबाधकान्तरायोगात् । तादृशबाधकसत्त्वे वा भावाज्ञानस्य मिथ्यात्वं पारिभाषिकमेव न तु वस्त्वनुपातीति स्यात् । न हि ज्ञानाबाध्यो मिथ्येति युक्तम् ॥

ननु ज्ञानाभावादीनां परस्पराभिभूतत्वमपि दृष्टम् । न च तेषां प्रातिस्विकमवस्थात्रयेऽप्यनुगतं स्वरूपमस्ति । विद्यया च तदेवाज्ञानं हातव्यत्वेन स्वीकार्यं यद्दण्डायमानं वर्तते सर्वदा यावद्विद्योत्पत्ति । तथा च बादरायणीयं सूत्रम्-- **'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'** --इति । असत्यां हि तादृश्यामविद्यायां कस्य स्यात्संसारित्वं यत्कृते स्याद्विद्योपदेशः सप्रयोजनः ?

तत्किमिदानी संसारमोक्षयोः शास्त्रोपदेशस्य चार्थवत्त्वं प्रापयिषुर्भवान्वास्तविकवृत्तेनैव भावाविद्यासत्त्वमवस्थात्रयेऽप्यभ्युपगमयितु प्रवृत्तोऽस्ति ? हन्त तर्हि कृत्योत्थापनमिदं स्वविघाताय । यस्माद्वस्तुसती सा वराक्यविद्या नैव विद्यापनोद्या भवेत् ॥

यत्तूक्तम् ज्ञानाभावास्तमयस्य ज्ञानोत्पत्तिनान्तरीयकतया नापनोद्यत्वं सम्भवतीति । भावाज्ञानेऽपि तत्समानमेव । यदि हि ज्ञानोत्पत्त्यनन्तरं क्षणमात्रमपि तवाज्ञानं तिष्ठत्यसत्यपि तद्ध्वंसप्रतिबन्धके, सत्यपि च विरोधिनि ज्ञाने, तत एव हीयेत ज्ञानाज्ञानयोर्विरोधः । न च प्रारब्धकर्मसद्भावो विनाशप्रतिबन्धक इति साम्प्रतम् । कर्मणोऽप्यज्ञानकार्यत्वेन तस्य ज्ञानापनोद्यत्वाभावे हि ज्ञानाज्ञानयोर्विरोध एव विप्लवेत । न च युज्यते ज्ञानस्य भाविजन्मप्रतिबन्धकत्वमेव भावाज्ञानविरोधित्वम्, न तु प्रारब्धफलस्यापि कर्मणो विनाशकत्वमपीति । तथा सति ज्ञाने सत्यपि मुक्तिर्भवित्री न वेति सन्देहानप-

गमप्रसक्तेः । निश्चिते वा मुक्तिफलसद्भावे ब्रह्मज्ञानस्यानुभवपर्यवसायित्वं न स्यादिति दुर्वारः स्याद्दोषः । अपि च – ज्ञान चेत्प्रमाण तर्ह्यवश्यमपाकुर्वदेवाज्ञानमात्मलाभमश्नुवीत[1] । इदमेव हि प्रमाणानां प्रमाणत्वं नाम यत्स्वप्रमेयगताज्ञाननिवारकत्वम् । न च प्रमाणबुद्ध्युपजनेरूर्ध्वं प्रमाणव्यापारं किञ्चिदपेक्ष्यैव भवत्यज्ञानापनुत्तिलक्षणा क्रियेत्युत्प्रेक्षितुं शक्यते । न[2] हि यथा कुठारोत्पत्तेरूर्ध्वमपि तद्व्यापारः काष्ठच्छेदादिरुत्पत्तिव्यतिरेकेण विद्यते, तद्वदत्रापि स्यादित्युपपन्नम् ॥

**५४. अज्ञानमित्यत्र ज्ञानशब्दस्य वृत्तिपरत्वे न दोषः :**

यदप्युक्तम् -- ज्ञाने वृत्तिरूपेऽङ्गीक्रियमाण औपचारिकस्स्यादज्ञानशब्दः, बुद्धिमात्रं वा स्याज्ज्ञानाभवशब्दाभिलप्यमिति । तदसत्, वृत्तावेव ज्ञानशब्दस्य मुख्यवृत्तित्वात् । न ह्यात्मा वेदान्तिनां नये ज्ञानादिशब्दवाच्यः, तस्मिन् सर्वविधशब्दप्रवृत्तिनिमित्ताभावात् । वृत्तिविषयेणैव त्वात्मा ज्ञानशब्देन लक्ष्यते[3] । न च वृत्त्यभावस्य बुद्धिमात्रावशेषरूपत्वेऽभावत्वहानिः । सर्वत्रैवमेवाभावबुद्धेर्भावविषयत्व दर्शयितुं शक्यत्वात् । शक्यते हि वक्तुं घटाभावः पटादिरेव नान्य इति । तस्मान्नाभावरूपाज्ञानवादिनैव परिहर्तव्योऽयं दोषः । येन तु तत्र

१. स्वप्रमेये प्रमाणं सत्प्रवृत्तं स्वात्मलाभत ।
अज्ञानाद्यनिरासेन नास्ति लोके प्रबोधकम् ॥ —वा०

२. क्रियाप्रभेदविरहाज्ज्ञानं वा निखिलं तम ।
हन्त्यात्मलाभमात्रेण न तदन्या तमोहुति ॥
निष्पन्नोऽपि कुठारादि प्रयोगविरहाद्यथा ।
द्वैधीभावाय नैवालं तथा नैव प्रमाणधी ॥ —वा०

३. न ज्ञानशब्दवाच्यमपि तद्ब्रह्म । तथापि तदाभासवाचकेन बुद्धिधर्मविषयेण ज्ञानशब्देन तल्लक्ष्यते ॥ —तै० भा०

घटपटव्यतिरेकेण घटानुपलब्धिगम्यो घटाभावोऽपि स्वीक्रियते, तेन वृत्तिवृत्तिमतोर्व्यतिरेकेण वृत्त्यनुपलब्धिगम्योऽपि वृत्त्यभावः स्वीकर्तव्यो भवतीति यत्किञ्चिदेतत् ॥

न चाज्ञानशब्दो ज्ञानाभावे पूर्वैरप्रयुक्तचरः । **"सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तत्र पतन्ति मूढा ज्ञाने फलं पश्य यथा विशिष्टम्"** ॥ इत्यादौ तथा प्रयोगदर्शनात् । ज्ञानस्यात्मगुणत्वपक्षे चोक्तदोषस्तदनभ्युपगमादेव प्रमार्जितो वेदितव्यः । तस्माज्ज्ञानाभावपक्षेऽपि ज्ञानापनोद्यत्वमज्ञानस्य सुस्थम् । अनयैव दिशा मिथ्याज्ञानसंशयज्ञानयोरपि ज्ञानापनोद्यत्वं शक्योपपादम् ॥

५५. **ज्ञाननिवर्त्यमित्यत्र निवर्त्यपदार्थः** : यत्पुनरुक्त ज्ञानाभावादीनां परस्पराभिभूतत्वमपि दृष्टं, न च तेषामवस्थात्रयेप्यनुगत स्वरूपमस्तीति । नैष दोषः । परस्पराभिभूतत्वेऽपि तेषामात्यन्तिकनिवृत्तेर्ज्ञानं विना सम्भावनाभावात् । न चाननुगत स्वरूपम्, वर्णितरूपनिवर्त्यत्वस्यैव स्वरूपत्वात् । न चैवं परस्पराश्रयणम्, विद्यानिवर्त्यत्वादविद्याया विद्यायाश्च तन्निवर्तकत्वादिति शङ्कनीयम्, वस्तुतो विद्योदयव्यतिरेकेणाज्ञाननिवृत्तेरनङ्गीकारात् । ननु तर्हि निवर्त्याभाव एव । नैतदपि, ज्ञानाभावादिव्यवहारस्यैव तत्त्वात्, विद्योदयमात्रेणैव च तन्निवृत्तिनिर्वाहात् । न चावस्थात्रयेऽप्यनुगतस्वरूपाभावादनिवर्त्यतातादवस्थ्यम् । अवस्थात्रयेऽपि सत्त्वेऽत एव निवर्त्यत्वाभाव इत्युक्तपरिहारात् । तस्माज्ज्ञानाभावमिथ्याज्ञानसंशयज्ञानव्यतिरेकेण[1]

१ अज्ञानमिथ्यासंशीतिव्यतिरेकेण नापरम् ।
प्रत्यर्थि मेयविषये मानस्येहास्ति किञ्चन ॥ —वा०

न ज्ञानापनोद्यं तद्विरोधि विद्यते । तस्मान्न विद्याविधानान्यथानुपपत्त्या भावाज्ञानसत्त्वावगम इति सिद्धम् ॥

## व्यावहारिक्यपि मूलाविद्या न स्वापे स्वीकार्या

५६. **मूलाविद्यायां प्रमाणाभावेऽपि साक्षिवेद्यत्वेन तत्सिद्धिरिति शङ्का :** उक्तमेतन्मूलाविद्यासद्भावे न प्रत्यक्ष नानुमानं न चार्थापत्तिर्नैव च शब्द. प्रमाण भवतीति। यद्यपि मिथ्यावस्तुप्रतिभासतद्बाधानुपपत्तिः प्रमाणमित्याचक्षते नवीनवेदान्तिन.। यद्यपि च 'तम आसीत्' इत्यादिभिः श्रुतिभिरविद्यासत्त्वमवगम्यत इति ते स्वगोष्ठीषु व्यवहरन्ति । तथापि मिथ्यावस्तुनो मिथ्यात्वादेव प्रथनोपपत्तिरित्युक्तसमाधानत्वात्, श्रुतिपरिज्ञापिताया अविद्याया नवीनसम्मतमूलाविद्यापरत्वे गमकाभावाच्च मूलाविद्या न विद्यमानमूलप्रमाणेत्येव निश्चीयते । वक्तव्यदोषश्च प्रतिवादिसम्मतानिर्वचनीयमिथ्यावस्तुख्यातिवादो मूलाविद्याप्रमापकश्रुतिसद्भाववादश्चाग्रे । तस्मान्नास्त्येव प्रमाणमविद्यायाम् ॥

स्यादेतत्--यद्यपि प्रत्यक्षानुमानार्थापत्तिशब्दलक्षणप्रमाणान्युपन्यस्यन्तेऽविद्यासद्भावे । तथापि नात्रास्माकं निर्भरः । न हि वय प्रमाणगम्यामविद्यामाचक्ष्महे, कि तु साक्षिवेद्याम् । न चैवं प्रमाणगम्यायां तस्यां प्रमाणोपन्यासो व्यर्थ एव, असद्व्यावृत्त्यर्थत्वात् । असतो व्यावृत्तेव ह्येषा साक्षिणा गृह्यते । कः पुनरसौ साक्षी? अविद्यावृत्तिप्रतिबिम्बितचैतन्यम् । यद्यप्यविद्यानुभवरूपं स्वरूप सुषुप्ताविव अवस्थान्तरेऽप्यस्ति । तथापि सुषुप्तिरूपाया अज्ञानवृत्तेर्नाशे तद्विशिष्टाज्ञानस्य साक्षिणानुभूयमानत्वाभावेन संस्कारजन्याविद्यावृत्त्यैव तादृशाज्ञनभानात्, स्मरणत्वमपि घटते 'न किञ्चिदवेदिषमि'त्यस्य ।

तदेवं मूलाज्ञानस्वरूपमात्रं साक्षिवेद्यम्, तद्गतभावत्वादिकं तु प्रमाणेनोपनीतमित्यविरोध इति ॥

**५७. अविद्यासाक्षिवेद्येत्येतदपि न सम्यक् :** एतदपि नोपपद्यते, अविद्यास्वरूपस्यैवासिद्धौ तद्गतवृत्तितत्प्रतिबिम्बितचैतन्ययोः सुतरामसिद्धेः । न च साक्षिणैव सिद्धिः । अविद्येत्येव साक्षिवेद्यायास्तस्यास्त्वदभ्यूहिते पर्यवसानायोगात् । न हि साक्षी त्वदभ्यूहितस्वरूपामविद्यामावेदयति । प्रमाणानि तूपन्यस्तानि न तद्विशेषस्वरूपसमर्पणे प्रगल्भन्ते । तथा च प्रदर्शितं पूर्वस्मिन् ग्रन्थभागे । अपि चाविद्यायाः स्वरूपत एवासिद्धाया वृत्तिरङ्गीकरणीया, तत्र च चैतन्यप्रतिबिम्बनं स्वीकार्यम्, तद्वेद्यत्वेनैव चाविद्याप्रतीतिः प्रतिपादनीयेति च विचित्ररूपिणीय भवतः प्रतिपादनरीतिः ॥

**५८. मूलाविद्या व्यावहारिकीत्यपि न साधु, व्यावहारिकत्वलक्षणस्यैवासिद्धेः :** ननु मूलाविद्या यद्यपि न परमार्थदृष्ट्या सिध्यति स्वापे, तथापि व्यावहारिक्येव सेति नोद्भाविता दोषा भवन्ति । एतदप्ययुक्तम्, व्यावहारिकदृष्टेरनिरूपणात् । व्यावहारिकमिति हि किमिदमुच्यते? परमार्थदृष्ट्या बाध्यत्वमथ च प्रतीयमानत्वं व्यावहारिकत्वमिति चेत् । परमार्थदृष्टिरेव कीदृशीति परीक्षामधिकरोति । यद्युच्येत—शास्त्रीया दृष्टिः सम्यग्दृष्टित्वात्पारमार्थिकीति, तत्र पर्यनुयोगो भवति कथं विज्ञायते तथात्वमिति? शास्त्रोपदेशानुग्रहात् पश्चादपि ज्ञानिनां मूर्धाभिषिक्तमन्यस्याप्याप्राणोत्क्रमणं वरीवर्ति सस्काराख्यमज्ञानमिति महानाग्रहो भवताम् । तत्कथ शक्येताध्यवसातुं यच्छास्त्रीया दृष्टिः समीचीनेति? नन्वतीन्द्रियवस्तुषु शास्त्रमेव नः प्रमाणमिति तद्दृष्टिरेव सम्यग्दृष्टिरित्यभ्युपगच्छामः ।

लोकदृष्टिस्तु न तथा । अतो न मृष्यामहे तामिति चेत् । स्यादेवमपि तस्य यस्य मते वेदान्तशास्त्रं[1] कालान्तरभाविफलकम् । न तु तथा शक्यतेऽभ्युपगन्तुम्, कर्मशास्त्र ज्ञानशास्त्रमिति च विभागे हेत्वभावप्रसङ्गात् । उभयोरपि देहपातानन्तरभाव्यदृष्टफलसाधनत्वप्रकाशकत्वे हि न विशेष· कश्चन स्यादनयोर्येन सिध्येद्विभागः । तस्माच्छास्त्रीया दृष्टिः सम्यग्दृष्टिरिति न सम्यग्भाति । ततश्च व्यावहारिकदृष्टेः सिद्ध्यभावः ॥

अभिज्ञाभिवदनमादानमर्थक्रियेति चातुर्विध्येन वर्ण्यमानो व्यवहार , तद्विषयत्वं व्यवहारिकत्वमिति चेत् । तत्र प्रातिस्विकानामभिज्ञादीनां विषयत्वं मिलितानां वेति विकल्प्यम् । प्रातिस्विकपक्षे तावदर्थक्रियाकारित्वं व्यावहारिकत्वमित्युक्तं स्यात् । तथा चेत्किं ब्रह्मणोनास्ति तत्? यद्यस्ति तर्हि को भेदो व्यावहारिकपरामार्थिकयोरिति? अथ नास्ति, कथं ब्रह्मज्ञानार्थं प्रवृत्तिः? किं च – अभिज्ञादिविषयं व्यावहारिकमिति वदन् द्वैतिना चेत्पृच्छ्यते पारमार्थिकमेव किं न स्यादिति तस्य किमुत्तरं देयमस्ति? अत एव समुच्चयपक्षोऽप्यसमीचीनः । किं चाभिज्ञादिचतुर्विधव्यवहारोऽपि सम्भवति स्वप्ने । तथापि स्वाप्नपदार्था व्यावहारिका नाभ्युपगम्यन्ते । तस्मान्नाभिज्ञादिविषयत्वं व्यावहारिकत्वम् ॥

नापि बाध्यत्वेनाशक्यव्यवस्थापनत्वं तत् । बाधस्याशक्यप्रदर्शनत्वेन यदेव व्यावहारिकमित्युच्यते तदेव पारमार्थिकमिति किं न स्यादिति पर्यनुयोगसम्भवात् । आत्मनोऽपि बाधस्याशक्यप्रदर्शनत्वात्तस्यापि व्यावहारिकत्वापत्तेश्च ॥

१ न च देशकालनिमित्तापेक्षो मोक्ष· कर्मफलवद्भवितुमर्हति ॥
—सू० भा०

एवमेव 'आत्मभिन्नं सर्वं व्यावहारिकम्' 'असत्यमेव व्यावहारिकम्', 'अद्वैतविरोधिसर्वमपि व्यावहारिकम्', 'अविद्यादशाया प्रतीतं व्यावहारिकम्' इत्यादिलक्षणैः प्रतिज्ञामात्रपर्यवसायिभिर्न कथंचन परमार्थसत्तातिरिक्ता व्यावहारिकी सत्ता सेद्धुं पारयति । विपरीतमेव कस्मान्नेति चोद्यस्य सर्वत्र सुलभत्वात् ॥

न चैवं प्रत्यवस्थातुं साम्प्रतम् -- अनादिभावरूपाज्ञानतदधीनयोरन्यतरं व्यावहरिकम्, व्यावहारिकस्य सर्वस्य मोक्षहेत्वात्मैक्यज्ञानेन निवर्त्यत्वमेव स्वरूपमिति । यस्मादज्ञानस्य भावत्वम्, भेदस्य तदधीनत्वं च प्रागेव प्रत्याख्याम । मोक्षहेतुभूतज्ञानमपि तादृशाज्ञाननिवर्तकमिति नाद्याप्युभयसम्प्रतिपन्नम् । न हि त्वयापि ज्ञाने सत्यपि तादृशाज्ञानसद्भावो लेशतोऽपि न भविष्यतीत्युच्यते । तत्कुतो व्यावहारिकत्वस्थापने व्यसनमिति ॥

एतेन 'ब्रह्मज्ञानेतराबाध्यत्वमेव व्यावहारिकत्वमि'त्यपि निरस्तम् । ब्रह्मज्ञानासिद्धया तदितरतावाचोयुक्तेरपार्थकत्वात् । ब्रह्मैव सत्यं तदितरान्मिथ्येतीदमेव हि ब्रह्मज्ञानम् । न चेदं सम्भवि यस्य मते सुषुप्तावविद्या स्वीक्रियते । ब्रह्मज्ञानबाध्यत्वस्य दुरुपपादत्वाच्चैतदेवं प्रतिपत्तव्यम् । न हि तदपबाध्यो व्यवहार इति युज्यते, जीवन्मुक्तौ सत्यपि ज्ञाने व्यवहाराबाधात् । न च वाच्यम् -- चरमवृत्तिरेव ब्रह्मज्ञान तद्बाध्यश्च व्यवहार इति । ब्रह्मज्ञानबाध्यत्वस्य विश्वासमात्रग्राह्यत्वापातात् । स्वकालेऽबाध्यत्वेन प्रतीयमानस्यापि स्वप्नस्य प्रबोधे बाधदर्शनाच्च ब्रह्मज्ञानेतराबाध्यत्वमपि दुर्ज्ञानमिति ज्ञेयम् । अनेनेदमप्यपहस्तितम् -- आशुतरबाधयोग्यं प्रातिभासिकम्, विलम्बितं बाध्यमान व्यावहारिकं, बाधायोग्यं तु पारमार्थिकमिति ।

बाधात्पूर्वं कस्यचिदपि बाध्यत्वबुद्ध्या झटिति बाध्यत्वबुद्ध्या वा गोचरणीयत्वाभावात्। स्वप्नेऽपि हि तत्काले स्थिरत्वबुद्धिरेवोदेतीति ॥

यत्पुनराह कश्चित्—परिणामवत्त्वमेव व्यावहारिकत्वम्, आत्मनः कूटस्थत्वादेव च पारमार्थिकत्वमिति । तत्तुच्छम् । न हि व्यावहारिकस्यैकबुद्धिबोध्यस्य मिथ्यात्वे हेतुरस्ति । न वा निष्प्रपञ्चात्मस्थितिः शक्योपपादना तत्र पक्षे, परिणामिनित्यस्य प्रपञ्चस्य बाधे हेतोरभावात् । तस्मादलक्षणमेतत् ॥

अस्तु तर्हि 'मूलाविद्यातिरिक्तदोषाजन्यत्वं व्यावहारिकत्वम्' । नैतदपि रम्यम्, अविद्याया स्वरूपस्याद्याप्यसिद्धे । दोषान्तरमप्यस्ति लक्षणे। कुत एतत्? प्रातिभासिकं सर्वमप्यविद्यातिरिक्तदोषजन्यं भवतीति तद्वारणाय प्रवृत्तौ—अविद्यारूपदोषमात्रजन्यं व्यावहारिकं भवतीत्येवं वक्तव्यम् । अविद्या यद्यपि व्यावहारिकी तथापि न जन्मप्रसक्तिरस्यामिति तस्यामव्याप्तिपरिहाराय प्रवृत्तौ—अजन्यं व्यावहारिकमित्यपरं लक्षणं वक्तव्यम् । एव स्थिते मूलाविद्यातिरिक्तदोषाजन्यत्वमिति लक्षणेऽतिव्याप्तिवारणस्थले— 'अजन्यम्' इत्यस्य प्रकारान्तरेण जन्यत्वमर्थः । अव्याप्तिनिवारणस्थले पुनः सर्वथा जन्यत्वाभावोऽर्थः । इत्थं चाजन्यशब्दस्य प्रवृत्तिनिमित्तभेदान्नास्त्येवात्र लक्षणमुभयसाधारणमिति कुतः सिद्धिर्व्यवहारिकसत्त्वनिर्वचनस्य? स्यादेतत्—अविद्याप्यात्मनो विवर्तः । तस्मादात्मजन्यत्वमस्त्येवास्यामपि । तदत्रापि प्रकारान्तरेण जन्यत्वमेवार्थोऽस्तु, किमनेन मुधा दोषोद्भावनेनेति । तदपि नोपपद्यते । अविद्याया अनादित्वस्याभ्युपगतस्य प्रहाणे । न च वाच्यं आत्मातिरिक्तजन्यत्वाभाव एवानादितेति । सर्वस्याप्यात्मजन्यत्वादनादित्वप्रसङ्गात् । ननु च भोः सर्वस्याविद्याव्यतिरिक्त-

वस्तुन आत्माविद्यारूपोभयकारणजन्यत्वमस्ति, अविद्यायां तु न तथेति विशेषः। मैवम्, अविद्याजन्यत्वसिद्धौ व्यावहारिकत्वसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति परस्परालम्बनदोषग्रासात्। जीवेश्वरादीनामनादित्वमभ्युपगम्यते त्वया, न च तेषामुक्तलक्षणलक्षितमनादित्वम्। तस्मान्नास्त्येतदुक्तलक्षणे सर्वत्राजन्यशब्दस्य प्रकारान्तरेण जन्यत्वमेवार्थ इति। अतो न भवत्येतदपि निर्दुष्टं लक्षणम्॥

न च लक्षणान्तरं सम्भावयामो भवत्पक्षे। तदेवं सुषुप्तौ व्यावहारिक्येव मूलाविद्येत्येतदप्यसङ्गतं वचनं व्यावहारिकत्वस्यैवानिरुक्तेरित्यास्तां विस्तर·॥

## सुषुप्त्यविद्यावादे दोषान्तराणि

५९. **द्वैतबन्धस्य मिथ्यात्वे हेत्वभावः :** तदेवं भावरूपाविद्याया स्वरूपासिद्धिः, अभ्युपगताया अपि तस्या बन्धमोक्षाद्यनुपपादकत्वम्, विद्यया च तदुच्छेदानुपपत्तिः, परमार्थव्यवहारविभागबीजाभावश्चेत्येते दोषा आचार्यदेशीयानां पक्षे वर्णिताः। अज्ञानसिद्धये चोपनीता हेतवश्चाभासिता। एतेन भावाविद्याया अनिर्वचनीयत्व यदुररीक्रियते तदनिर्वचनीयमेव भवत्येतत्प्रक्रियायामिति सिद्धम्। न हीदृश्या अविद्याया शून्याद्भेदं भाविकं सम्भावयेदत्यन्तमूढोऽपीति। ततश्च द्वैतबन्धस्य मिथ्यात्वे हेत्वभावात् प्रतिज्ञामात्रमद्वैतमितीत्यवश्यं मन्वीरन् बुभुत्सव॥

६०. **अवस्थानां पौर्वापर्यकल्पनमयुक्तम् :** अपि च दोषान्तराण्यपि सन्त्यस्मिन्वादे। तत्र दिङ्मात्रं दर्शयामः। तत्रायं प्रथमो दोषो यदवस्थानां पूर्वोत्तरत्वप्रकल्पनं परस्परं कार्यकारणभावकल्पनं

चेति । सुषुप्तिस्तावत्, तदुत्तरकालं जागरणम्, जागरणोत्तरकालश्च स्वप्न इति स्वापजागरस्वप्नानामुत्तरोत्तरस्य पूर्वपूर्वसमनन्तरभावित्वम्, तत्तत्कार्यत्वं चाभ्युपगम्यते भवद्भि । अन्यथा हि स्वापाज्जागरप्रपञ्चोद्भवे कारणगवेषणम्, स्वप्नस्य जागरितवासनाजन्यत्वप्रतिज्ञानं च किमुपजीव्योत्थाप्येतेति । वयं त्वत्र प्रतिपद्यामहे -- नायं साधुरभ्युपगम, प्रमाणाभावात् । न ह्यस्ति प्रमाणं सुषुप्त्यनन्तरं जागरेणैव भाव्यमिति, स्वप्नोद्भवस्य निवारकाभावात् पूर्वोपदर्शितमुद्रया स्वप्नजागरयोर्भेदकलक्षणाभावाच्च । अत एव जागृतेरनन्तरं स्वप्न इत्यपि न सम्भवति । तस्मान्नास्ति नियमो यदवश्यं सुषुप्ताज्जागृतिरेवानन्तरभाविनी जागृतिश्च स्वप्नतः समनन्तरपूर्वैवेति ॥

एतेन सुषुप्त्यादीनां कार्यकारणभावोऽपि निराकृतो भवति । यस्मात् कारणं कार्यस्य समनन्तरपूर्ववृत्तीति नियमोऽभ्युपगम्यते कारणवादिभिः । दर्शितस्तु नैयत्याभावोऽवस्थानां पौर्वापर्यस्येति । ननु यद्यपि स्वप्नजागरितयोर्नियतानुपूर्व्यभावः, तथापि, सुषुप्तिपूर्वकत्वाज्जागरितस्वप्नयोस्तत्रापि सिद्ध कार्यकारणभाव किं कारणं प्रक्षिप्यते? तत्र शृणु । सुप्तिं कारणमिति जागरितं कार्यमिति च ये ब्रूयुः, ते तयोरवस्थयोरनुगत कालोऽस्तीति मध्ये च तयोरसुप्तजागरितरूपान्तरालमस्तीति चाप्यभ्यनुजानीयु । नत्वेषोऽभ्युपगमो न्याय्यः । तथा हि -- न तावदवस्थयोरन्तरालं किञ्चिदनुभूयते सम्भाव्यते वा । तद्ध्यन्तरालं भवत्कीदृश भवेत्, विषयसहित तद्रहितं वा? आद्ये जागरितस्वप्नयोरन्यतरत्वम् । द्वितीये तु सुषुप्तेरव्यतिरेक एव प्राप्नोति । न चास्त्यन्य प्रकार । तस्मान्न सम्भव्यभ्यन्तरमवस्थयोः ॥

नन्ववस्थाना गमागमरूपत्वात् तदाधारभूतः कालः सर्वास्वप्यवस्थास्वनुस्यूतोऽनुमीयताम्। न हि कालस्याभावः शक्यसम्भावन इति। नैतदेवम् । यस्मात्सुषुप्तौ नानुभूयते केनचिदपि काल । गमागमत्वं क्रमिकत्वं चावस्थानामित्येतदनुभवविरुद्धत्वाद्भ्रान्तिरेवेति निर्णेतव्यम्। न त्वनुभवमप्यनादृत्य गाढनिद्रायामपि कालसत्त्वं कल्पयितुं युक्तम्। यत्सत्य कालावच्छिन्नमनसः कालाभावो दुरवधारण इति, कालशब्दप्रत्ययौ विना व्यवहार एव नात्मानमासादयतीति च । तथापि सुषुप्तौ कालाभावस्य दृष्टत्वान्न साध्वनुमानमवस्थात्रयानुगतः काल इतीति स्पष्टमेव सूक्ष्ममतीनाम् । अपि च स्वप्ने य कालाभासः स न भवितुमर्हति जाग्रत्काल एवेति सर्वसम्प्रतिपन्नमेतत् । न च स्वप्ने स्वाप्नकालाधारः परोऽखण्डकालोऽनुभयते। तस्मान्न सम्भावनीयः समानकालाधारत्वमवस्थात्रयस्य । परित्यक्ते तु समानकालाश्रयत्वे नैव सम्भवति सुषुप्त्यादीना कार्यकारणभावः ॥

तदित्थं सुषुप्तादीना परस्परसापेक्षताया असिद्धत्वात्,-- जाग्रत्प्रपञ्चोपलम्भसिद्ध्यर्थं सुषुप्ताविद्यास्वीकारो, ‘न किञ्चिदवेदिषम्’ इत्यस्य सौषुप्तस्मणत्वाभ्युपगमः, स्वप्नप्रपञ्चस्य जाग्रद्वासनारूपत्वाङ्गीकारश्चेत्येतत् त्रितयमपि निरुपपत्तिकमिति यत्प्रागेवादर्शितं तदपि दृढीकृतं भवति । अवस्थात्रयानुगतस्य कालस्य अवस्थात्रिके परस्परकार्यकारणत्वस्य वा सिद्धिमन्तरा उक्ताङ्गीकारानुपपत्तेः ॥

**६१. सुषुप्तेरज्ञानकारणकत्वे तत्स्वरूपत्वे च दोषः:** अपि च सौषुप्ताज्ञानवादिनः पर्यनुयोज्या भवन्ति -- अविद्या यदि प्रपञ्चकारणं तर्हि प्रपञ्चकुक्षौ तिस्रोऽप्यवस्था निक्षिप्येरन्न वा। आद्ये सत्यपि कारणे मूलाज्ञाने कुतो निद्रा सदा न भवतीति । न प्रति-

बन्धकसत्त्वात्, तथा हि सति तन्नोदकाभावे भावे वा सुषुप्तेरेव न स्यादवकाशः। प्रतिबन्धकनोदकस्याभावे हि तस्य लब्धप्रसरत्वात् सुषुप्तेरवश्यं व्यात्प्रतिबन्धः। भावे च तस्यैव द्वितीयत्वादात्मनः सुषुप्त्यभावः। द्वितीये तु कल्पे सुषुप्तेरज्ञानं कारणं न वेति विचिकित्सायां पूर्वोक्तमुद्रयानारतं सुषुप्तिरेव प्रसजेत् सुषुप्त्यभावो वा स्यात्। अथवा सुषुप्तेर्निर्निमित्तत्वं दुष्परिहरणीयं भवति। तच्च पूर्वमेव दूषितम्॥

अथ सुषुप्तमेवाज्ञानमितीष्यते, हन्त तर्हि सुषुप्तिविगमे विरमेदपि भावाज्ञानम्, अहमस्वाप्समिति व्यवहारस्यान्यथानुपपत्तेः। यदि मनुषे—कारणावस्थां परित्यज्य कार्यावस्थां प्राप्स्यत्यविद्या जागरस्वप्नयोः, ततश्चोपपन्नः समुदीरितव्यवहार इति। तत्र पृच्छामः—कारणाविद्या जागरितस्वप्नयोर्यदि न विद्यते तर्हि सुषुप्ते सत्यपि सा कथं केन प्रत्यभिज्ञायेत, कथंतरां तत्स्वरूपं जागरितेऽत्यन्तमप्रसिद्धं जागरितप्रपञ्चोपलम्भलिङ्गादनुमीयेतेति॥

ननु कार्यकारणोभयरूपाप्यविद्या विद्यत एव जाग्रत्स्वप्नयोः। न हि घटत्वमापद्यमाना मृत्स्वात्मनो मृत्त्वमपजहातीति चेत्। न तर्हि कारणाज्ञानमेव सुषुप्तिः, तस्यावस्थान्तरेऽपि सत्त्वात्। न च कारणाज्ञानमात्रं सुषुप्तिरिति वक्तुं युक्तम्। कारणाज्ञानस्य कार्याज्ञानसाहचर्यस्याप्यभ्युपगमात् सुषुप्तिजागरितयोर्मृद्घटयोरिवैकस्मिन्नेव पुरुषे सह सम्भवप्रसङ्गात्॥

६२. **सुषुप्तिस्वरूपमपि दुर्निरूपम्ः** कीदृशीं च सुषुप्तिमभिप्रेत्य तस्यामज्ञानसत्त्वमुररीकुर्वन्ति भवन्त इतीदमपि विचारणीयम्। ननु किमस्ति विचारणीयम्? इन्द्रियमनआदीनां व्यापारोपरमे स्थूलसूक्ष्मोभयरूपप्रपञ्चस्य कारणात्मनावस्थानमेव सेति चेत्।

अत्रैव विमर्शनीयम्—किमवस्थानक्रियारूपा सुषुप्तिराहोस्वित् तत्फलरूपा, उत यदात्मनावस्थितिस्तदेवेति । न प्रथमः, परिणामस्य तादृशस्य केनाप्यनुपलब्धेः । न हि सुषुप्तिरूपः परिणामोऽयमित्यनुभविता कश्चिदस्ति । यद्यस्तीत्युच्येत तर्हि सुषुप्तित्वमेवास्या स्थितेर्भज्येत, सुषुप्तौ सकलविशेषज्ञानविरह इत्युभयसम्प्रतिपत्ते । न द्वितीयः कल्पः, तादृशस्य फलस्य निर्वचनानर्हत्वात् । नो खलु तत्फलं द्रव्यगुणकर्माद्यन्यतममिति निर्वक्तुं शक्यम् । ततः प्रतिज्ञामात्रमेव सुषुप्तिरवस्थानक्रियाफलमिति । नाप्यन्तिमः पक्ष क्षोदक्षमः । यदात्मनावस्थितिर्मता तत्कारणं किमविद्यातो भिद्यते कि वा नेति विचारे कि स्वरूपिणी स्यादविद्या पूर्वस्मिन् कल्पे? अथाविद्यैव तत्कारणम्, तदपि न, पूर्वोक्तदोषात् । अपि च यद्यविद्यैव कारण सुषुप्तिश्च, सुषुप्ति भावरूपाविद्येति किमिति नानुभवति सर्वो लोकः? उक्तश्चायमर्थ सुषुप्तेः कारणत्वं न न्याय्यमनुमन्तुमिति ॥

नन्वभावालम्बना वृत्तिर्निद्रा भविष्यति, तत्र तन्त्रान्तरसंवादसद्भावादिति चेत् । मैवम्, वृत्तिमतः स्वरूपावधारणाभावात् । यदि मन्यसे तत्स्वरूपमज्ञानमेवेति नानवधारणमिति, तर्ह्यायातमज्ञानवृत्तिरूपायां सुषुप्तौ तद्वृत्तिमतोऽज्ञानस्य सत्त्वमिति वाचोयुक्तेर्निरर्थकत्वम् । यदपि तार्किकैः सह सन्धि कृत्वा वृत्तिवृत्तिमतोः समवायसम्बन्धः स्वीक्रियते तदाप्यज्ञानस्य स्वरूपाद्यसिद्धिस्तदवस्थैवेति सर्वमेतदभित्तिचित्रमेवेति पर्यवसास्यति । तस्मात्स्वरूपस्यानिरूपणात् सुषुप्तेः, तत्र भावाविद्याप्रतिज्ञान प्रतिज्ञामात्रमेवेति सिद्धम् ॥

६३. **अवस्थालक्षणाभावश्चास्मिन् पक्षे :** अपि च किं नामावस्थात्वं यस्मिन् सिद्धे सुषुप्तिरप्यवस्था स्यात्, तथा चाविद्या-

धिकरणत्वे संशयभूमिरिति? न तावद्विकारित्वम् । कस्य हि सा विकृतिः स्यात्? न मनसः, सुषुप्तौ तत्सत्त्वे मानाभावात् । नाप्यात्मनः, अनभ्युपगमात् । नाप्यनुभवस्थानत्वमवस्थात्वम्, सुषुप्तौ स्थानत्वबुद्धेरभावात् । नाप्यनुभवकालत्वं तत्त्वमिति साम्प्रतम्, सुषुप्तौ तद्बुद्धेरप्यभावात् । न चान्यदस्ति लक्षणमवस्थात्रयसाधारणम्, येन सुषुप्तिमवस्थां सम्प्रधारयामः ॥

ननु लोकसिद्धैवावस्था किमनया विडम्बनया? न हि कश्चिदत्यन्तमूढोऽपि सुषुप्तिमवस्था न मन्यत इति चेत् । हन्त भोः किमिति सर्वलोकसिद्धामविद्यां परित्यज्यादृष्टश्रुतचरीमभ्युपगतवानसि? ननु लोकसिद्धमेव स्वीकार्यमिति कुतोऽयं निर्बन्धः? विचारसिद्धं भावाज्ञानमपि स्वीकुर्म एव, तत्र कः प्रतिबन्धः? मैवम्, तथापि लोकसिद्धाज्ञानं कुतो न स्वीक्रियत इति वक्तव्यत्वात् । न न स्वीक्रियते किं तु ज्ञानबाध्याज्ञानत्वेन न स्वीक्रियते विचारासहत्वादिति चेत् । तर्हि लोकसिद्धमेव सुषुप्तेरवस्थात्वं विचार्यताम् । तद्यदि विचारबाध्यं तदपि त्याज्यं भविष्यति, इतरथा तूपगन्तव्यमिति समानम् ॥

एतेन यदुच्यते कैश्चिदाधुनिकैस्तदपि निरस्तं वेदितव्यम् । इत्थं किल तेषां पाश्चात्यदार्शनिकानामभ्युपगमः — अवस्था नाम विकार एव । आत्मा च विकारस्रोतोरूप एव । तस्य न विद्यते आदिरन्तो वा । एष च प्रवाहो गङ्गादिस्रोतःसीव स्वमार्गेऽनुभवान् नवनवानात्मसात्कुर्वाणस्ततो भवत्युपचितः । तस्यास्य प्रवाहस्य परिणामप्रकारं निर्दिधारयिषुणा चित्तेन पूर्णप्रवाहं गोचरयितुमशक्नुवता इतस्ततो भागश आदाय वीक्ष्यते । वस्तुतस्तु नास्त्येव विच्छेदो जगत्प्रवाहस्य कुत्रचित् । त एते भागा निरूपणार्थं मनःकल्पिता अवस्थाशब्दभाजो

भवन्ति । उक्तप्रवाहव्यतिरिक्तो नास्त्येवात्मा नाम कश्चित्कूटस्थरूपः, अखण्डविकारप्रवाहेऽस्मिन् कस्यचिदपि कूटस्थसत्त्वस्य दुरूहत्वात् । तस्माद्यथा किल बुद्धिः खण्डशः प्रकल्पयत्यवस्थाः, तथा तदनुस्यूतमपि किञ्चिदात्माख्यं कूटस्थमस्तीति भ्राम्यति सैव बुद्धिः । वस्तुतस्त्वनादिरन्तोऽखण्डप्रवाह एव तत्त्वमिति ॥

तदेतदापातरमणीयं क्षणिकविज्ञानसन्तानवादस्य सौगतैः प्राचीनैः कल्पितस्य रूपान्तरेण पुनरागमनम् । सर्वमप्यखण्डप्रवाहपतितमिति हि प्रतिज्ञाय कथमिदं शक्येत वक्तुं बुद्धिरस्मिन् भागानवस्थाशब्दवाच्यान् प्रकल्पयतीति । अन्तर्भूतैव हि बुद्धिरपि स्वपरीक्षितव्यप्रवाहे, तत्कथं स्यात्समर्था स्वपरीक्षायामिति । किंचान्यत् — अहमहमिति सर्वजन्तुषु प्रथमानश्चैतन्यरूप आत्मा किं बुद्धेर्भिन्नः किं वा नेति विकल्पनायामाद्ये सोऽपि प्रवाहरूप एव स्यात्, कूटस्थद्रव्यस्यैवानभ्युपगमात् । तत्र कथं प्रभवेद्बुद्धिः परीक्षितुं तस्य भागं स्वयमप्यविच्छिन्नं प्रवहती? द्वितीयपक्षे तु भवति प्रश्नः — यदि नित्यविक्रियैव बुद्धेस्सर्वस्य प्रपञ्चस्य च स्वभावस्तदा तस्माद्विक्रियास्वभावाददृष्टाश्रुतचरं स्थेमानमाकलयती बुद्धिः कथमात्मानं लब्धवतीति । यदि ब्रूषे — नाहं जाने केन प्रकृतिनियमेन विक्रियैषा भ्रान्तिरूपस्थैर्यग्राहिका बुद्धिं सुषुव इति, स्थितमेव तु वस्तुवृत्तं विवरीतुं प्रभवामीति । तथापि ब्रवीतु भवान् - कथमध्यवसितो यद्बुद्धिगृहीतं स्थिरत्वादिकं भ्रान्तिमात्रं विक्रिया तु स्वभाव इति । ननु बुद्ध्यपेक्षत्वात् स्थिरवस्तु विभ्रममात्रं बुद्धिव्यवधानमन्तरेण साक्षादेव ग्रहणान्नित्यस्यन्दनमेव तत्त्वमिति मन्ये इति किमिय प्रवाहलक्षणा विक्रिया सदानुभूयते? किं कारणं तर्हि सुषुप्तौ तस्या नानुभूतिस्तवापि?

अपि च यदापि चरस्थिरवस्तुरूपप्रवाहोपलम्भनम्, तदापि तत्साक्षी-चरस्थिरोभयविलक्षणः स्वतःसिद्ध आस्थेय एव सर्वविक्रियावादिनापि, अन्यथा सर्वविक्रियात्वस्यैवासिद्धेः। न च साक्ष्यपि जगत्प्रवाहान्तःपाती परिणामविशेष इति साम्प्रतम्। प्राक्तथाविधपरिणामात् प्रवाहस्य निस्साक्षिकस्यैवाभ्युपगमप्रसङ्गात्। न चेष्टापत्तिः, निस्साक्षिकस्य कस्यचिदपि मनसा चिन्तयितुमशक्यत्वात्। किं चान्यत् जगदनारत प्रवहतीत्यखण्डप्रवाहरूपं तत्त्वमभ्युपगच्छन् प्रष्टव्यो जायते — अयं प्रवाहः कुत्र क स्थानविशेष प्रतीति। यद्युच्येत — स्वभावोऽयमपर्यनुयोज्य एवेति। नैतत्सम्भावनीयम्, जगदनन्तःपातिनोऽनन्ताकाशस्य निरुपपत्तिकस्यानुभूतिं विनैव स्वीकारप्रसक्तेः। अन्यथा प्रवाहशब्द-स्यार्थशून्यत्वापत्तेश्च। स्वाभाविके जगत्प्रवाहेऽन्तर्भूतानां पुरुषाणाम-स्वातन्त्र्यप्रसङ्गाद्धर्माधर्मादिव्यवस्थापरिप्लवश्च प्रसज्यतेऽस्मिन्दर्शन इति बह्वसमञ्जसं कल्पितं स्यात्। तस्मादसच्चिन्त्यमिदं बुद्धिपरीक्ष्यजगत्प्र-वाहत्वम्, तस्मिंश्च प्रवाहभागे बुद्धिरवस्थाः कल्पयतीत्येतदत्यन्ता-सम्भावितकल्पनमवस्थातत्त्वमविजानतां इत्यलं प्रसङ्गागतसौगतसजा-तीयप्रक्रियाप्रत्याख्यानेन ॥

यद्यपि भावाविद्यावादिनो जगतः प्रवाहरूपतां न मन्यन्ते, तथा चैतन्मतखण्डन न प्रकृतोपयोगीव। तथापि जाग्रत्स्वप्नसुषुप्तीनां पूर्वा-परीभावं मन्यमानः कश्चिदनादिवादशरणतया बीजाङ्कुरन्यायेनावस्थानां प्रवाहरूपतामपि यद्यङ्गीकुर्यात्, तस्य परिहारार्थं भविष्यतीति न दोषः। न चास्तिकानां भावाविद्यावादिनां श्रुतिस्मृत्यवष्टम्भादनादि-वादो न दोषायेति शङ्कनीयम्। तेषां व्यवहारपरमार्थविभागासिद्ध्या सर्वस्यैव संसारस्य पारमार्थिकत्वेनैवानादिता स्यादित्युक्तदोषानुषङ्गात्।

अपि च यथा जगत्प्रवाहवादिना तथा जगत्स्थैर्यवादिनाप्यवस्था नाम मनःकल्पितो यः कश्चित्कालिको विशेष इति वदितु नैव पार्यते. सुषुप्तौ मनसस्तदनुभवस्य वा अदर्शनादित्येतदपि समानं दूषणम् । तदास्ता विस्तरेण । इद त्वत्र प्रकृतम् – निर्वचनाभावादवस्थात्वस्य सुषुप्तेरवस्थात्वमेव न सिध्यति । दूरत· प्रत्याशा तत्र भावरूपाविद्यासद्भावस्येति ॥

**६४. द्वैतिभिरापाद्यमानमनुपपत्तिसप्तकं चात्र दुष्परिहरम् :** दुष्पार्ष्णिग्राहश्चाय मूलाविद्यापक्ष । यतोऽस्मित् वादे द्वैतिनोऽनुपपत्तिसप्तकं प्रसजतीत्याचक्षते । तच्च दुर्वारणं यथास्मिन् दर्शने तथा सङ्क्षेपतो दर्शयिष्याम । आद्या तावदाश्रयानुपपत्ति । स्वयप्रकाशे हि ब्रह्मण्यविद्यासम्भवहेतोरभावे जीवभावस्य च स्वेनैव परिकल्प्यत्वात्किमाश्रित्येयमविद्या जीवभ्रम जनयेत्? तिरोधानानुपपत्तिर्द्वितीया । स्वयंप्रकाशरूपे ब्रह्मणि स्वरूपतिरोधान नाम न खलु युज्यतेऽविद्याकृतमपि । यदि स्यात्स्वरूपविच्छेद एव प्रसज्येतेति । अथ तृतीया स्वरूपानुपपत्तिर्नाम । इय ह्यविद्या न सती, अनभ्युपगमात् । नाप्यसती, असद्धेतोर्भ्रमजनकत्वस्य शङ्कावादिभिरनङ्गीकारात् । अत्यन्तासत· शशविषाणादेर्भ्रमजनकत्वादृष्टेश्च । यदि मन्यते– तस्मादेवेयमनिर्वचनीयेति स्वीक्रियते, ततो न सदसद्विकल्पदोष इति । तत प्रतीतिविरोधः । सर्वा हि प्रतीति· सदसदाकारेवेति, सदसद्विलक्षणवस्तुनि किं स्यात्प्रमाणम्? न चैव वाच्यम्. आत्मा सन् ततोऽन्यदसत्; उभयस्मादपि विसजातीयमनिर्वचनीयमिति । आत्मसत्त्वमेव ह्यन्यासाधारण न प्रतिष्ठापितमद्यापि भवता । सेयमनिर्वचनीयतानुपपत्तिचतुर्थिका स्वरूपानुपपत्तिः । प्रमाणानुप-

पत्तिरत्र पञ्चमी । न हि प्रत्यक्षादिकमविद्याविषये प्रमाणं भवति । यद्यदानीयते प्रमाणत्वेन तत्सर्वमपि खलु त्वदनिष्टज्ञानाभावरूपाज्ञान-विषयत्वेनैव नेतु शक्यते । यत्तु भवदभिमतमनुमानम्—प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्व-कम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रभाव-दिति । न तत्समीचीनमिव, स्वप्रागभावव्यतिरिक्तेति विशेषणदाने कारणाभावात् । न हि प्रागभावो न निवर्त्यते । दृष्टान्ते वैषम्यसद्भा-वाच्च । ज्ञान विना हि न केवलस्य दीपस्य प्रकाशकत्वमस्ति । विवादा-ध्यासित प्रमाणज्ञान स्वप्रागभावव्यतिरिक्तपूर्वक न भवितुमर्हति, प्रमाण ज्ञानत्वात्, भवदभिमताज्ञानसाधनप्रमाणज्ञानवदित्यादि प्रतिप्रयोगस-म्भवाच्चैतदनुमानं न समीचीनम् । तदेवं लक्षणप्रमाणशून्यत्वादज्ञानस्वरू-पानुपपत्ति पुरोक्ता सुप्रतिष्ठापिता । भवत्यन्याप्यनुपपत्तिरत्र । यतो निवर्तकमप्यविद्याया नोपपद्यते । यदपि ब्रह्मात्मैकत्वज्ञान श्रुतिबोधित-मस्या निवर्तकमिति, तत्स्वसम्प्रदाये श्रद्धां वहतो मनोरथमात्रम् । यस्माद्भेदवादिभि श्रुतेस्तात्पर्यमन्यदेवेति वर्ण्यते । अथास्या निवृत्त्यनु-पपत्तिरुपव्याख्यायते । वेद्यवेदितृवेदनादेर्मिथ्यात्वाभ्युपगमाद्विद्यापि मिथ्यैवेत्यायाति । ततश्च यथा मिथ्याभूताया अविद्याया निवर्तकान्तर-मुपेतव्य तथा विद्याया अपि तन्निवर्तकस्यापीत्यनवस्था वा तदनिवृत्ति-रेव वा स्यात् । न चेद शङ्क्यम्-ब्रह्मस्वरूपमेव ज्ञान तज्ज्ञाननिवर्त-कमिति । ब्रह्मणि तद्विनिवर्तके तिष्ठति सति ज्ञानस्यैवानुदयप्रसङ्गात् । ज्ञातापि किमध्यस्तरूपो जीव एव उत ब्रह्मेति विचार्यमाणे उभयथापि दोष. प्रादु'ष्यात् । अध्यस्तरूपस्य हि जीवस्य नाविद्यापरिमोषि-ज्ञानकर्तृत्वं सम्भवति । ब्रह्मणि तु सम्भवदपि ज्ञानं न मिथ्या भवेत् । यदा हि तदपि मिथ्यारूपं तदा तस्याप्यविद्या मूल भवति ।

तथा चाविद्याया निवर्तकानुपपत्तिदौस्थ्यमेव स्यादिति । अथ तस्या अविद्याया निवृत्तिरभ्युपेयते । तत्रापि भवति पुनश्चिन्ता दुरन्ता-निवर्तकज्ञानस्य कर्ता को भवेदिति? तस्मादेतद्दूषणपरिहाराय ब्रह्मणि ज्ञानं न मिथ्येत्यङ्गीकार्यं भवति । ततश्च स्वाभिमतहानि. । न हि ब्रह्मव्यतिरिक्तं किञ्चिदपि सत्यमास्थीयते मूलाविद्यावादिना । अपि च न कोऽपि ज्ञाता स्वनाशहेतुभूते ज्ञाने स्वय प्रयतते । एवमपि नोपपद्यते निवृत्तिः । इत्येवमधस्तात्समासतो दर्शितमनुपपत्तिसप्तकं द्वैतिभिरुद्भाव्यमानं मूलाविद्याप्रक्रियायाम् । न चैतस्माद्दूषणसप्तका-त्परिमोक्ष पश्यामो भावाविद्यामवस्थात्रयेऽप्यनुगतामाश्रियमाणस्य । तस्मादपि न युक्तियुक्तेयं प्रकृता प्रक्रियेति सिद्धम् ॥

**सौषुप्तस्मरणात् प्रबोधजगतो बीजं समुन्नीयते**
**मानैश्चाक्षमुखैः प्रयत्य परमोत्साहेन संवर्ध्यते ।**
**जीवब्रह्मविभागसिद्धिफलकं सुप्तौ न किं स्यादहो**
**मूलाज्ञानविदो विदुर्न तु परे सिद्धान्तमेनं शुभम् ॥**

इति श्रीमत्पूज्यपादशङ्करभगवच्चरणस्मरणपरिचयाप्तवेदान्तप्रवेशेन

**सुब्रह्मण्येन विरचिते**

श्रीमति शङ्करहृदये मूलाविद्यानिरासे

एकीयमतसमालोचनं नाम

द्वितीय· खण्ड·

—*—

# तृतीयः खण्डः

(स्वप्रक्रियानिरूपणम्)



यद्भाष्यालोकहीनास्तमसि निपतिता भावरूपामविद्या
मूरीचक्रुः सुषुप्तौ परिणतिमपि च प्रोचुरस्याः प्रबोधे ।
सद्योमुक्तिं च गौणीं विदुषि मललवं प्रेत्य मुक्तिं च मुख्याम्
त्रय्यन्तार्थप्रकाशानखिलगुरुगुरून् पूज्यपादान्नमस्ये ॥

यो वार्तिकाख्यममृतं परमादरेण
निष्पक्षपातमखिलं व्यदधादुदारः ।
भाष्याब्धितः प्रमथितं भवदुःखितेभ्यो
नूनं सुरेश्वरममुं प्रणमामि भक्त्या ॥

## स्वप्रक्रिया सङ्क्षेपतः

६५. परमार्थज्ञानमवस्थात्रयपरीक्षणमात्रगम्यम्: इत्थमियमेकीयप्रक्रिया युक्त्यनपेता, दुरवधारणायाः स्वाभ्यूहमात्रसिद्धाया मूलाविद्याया अभ्युपगमात्; निष्फला च, तदङ्गीकारेऽपि जिज्ञासोराशङ्कापारम्परीसमुत्थानस्य दुर्निवारणत्वादिति बह्वीभिरुपपत्तिभिः प्रतिष्ठापितमेतत्प्राक्तनेन विचारसंदर्भेण । अथेदानीं श्रीमद्गौडपादभगवत्पादाद्यभियुक्तसम्मता श्रौती प्रक्रिया निरूप्यते । जिज्ञासुदृष्ट्या तावद्विद्यन्ते जागरितस्वप्नसुषुप्तिसमाख्यास्तिस्रोऽवस्थाः । आसामन्यतमावस्थायामप्यचिन्तितायां तत्त्वस्यानवस्थानात्, विचारितासु

तास्ववस्थासु कस्यचिदपि[1] विज्ञेयान्तरस्यानवशेषाच्चासां तिसृणां विचारे तत्त्वपरिसमाप्तिरिति सर्वैरभ्युपेयम् ॥

६६. **अवस्थात्रयप्रक्रियायां सामान्यत आक्षेपाः :** ननु जागरितस्य सकललौकिकवैदिकव्यवहारभूमित्वादस्तु विचार्यत्वम् । स्वप्नसुषुप्त्योस्तु न किमपि विचारणार्हं पश्यामः । तत्र स्वप्नो हि नाम कादाचित्का निद्रादोषजन्या भ्रान्तिः न तु जाग्रद्वस्तुसतां दृश्यानामवकाशोऽत्र । सुषुप्तिस्तु सर्वकरणव्यापारोपरममात्रं न पुनरनुभवान्तरम् । तदेवं स्थिते किमस्ति तत्र यद्विचारणेनापि तत्त्वनिर्धारणमावश्यकं स्यात्? अथाभिप्रायः – भ्रान्तिः करणोपरमश्चास्माकमनुभवान्तर्गतावेव तत्तेषामपि विचार्यत्वम्, अन्यथा पूर्णानुभवाकलिततत्त्वनिर्धारणं न स्यादिति । तर्हि स्वप्नवदेव भवन्ति विचार्या मदमूर्छादयोऽप्यवस्थाः । तेषामपि हि स्वरूपं परिशीलनीयमेव तत्त्वबुभुत्सुना, अन्यथा पूर्णानुभवसम्प्राप्त्यभावप्रसङ्गादेव । अपि चैकस्य पुरुषस्यावस्थानां विचारणेन कथं सर्वमपि विदितं भवेत्? सन्त्येव खलु परे येषामनुभवोऽपि तत्त्वनिर्णयाय नात्यन्तमनपेक्षितव्यः । किं चान्यदनादिकालात्प्रवर्तमानस्यास्य जगतस्तत्त्वं कथं तदन्तर्गतैकपुरुषावस्थामात्रविचिन्तनेनाध्यवसेयं भवेदिति?

६७ **समाधानम् :** अत्रोच्यते – यत्तावदुच्यते जागरितस्य सकलव्यवहारभूमित्वमिति, तदभ्युपगम्यत एव । तद्गतव्यवहारस्य तु स्वरूपतः किं परमार्थसत्यत्वं अथवा स्वप्नादितौल्यमेवेति विशये स्वप्नादिस्वरूपविचारणं बलादायात्येव । अतो विचारणीये स्वप्नसुषुप्ती । यत्पुनरुक्तं स्वप्नः कादाचित्कभ्रान्तिमात्रं सुषुप्तिश्च करण-

1. सर्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावात् ॥ —का० भा०

व्यपारोपरम एव नान्यत्तत्र किमपि विचारणीयमस्तीति । तत्रापि जाग्रद्व्यवहारपक्षपातिभिः पुरुषैः कादाचित्कत्वेन स्वप्नसुषुप्ती व्यवह्रियेत इति तु सम्प्रतिपन्नमेव । तथापि खलु परीक्षणीयावेव स्वप्नस्वापौ–किं यथाप्रतिपन्नावेव तौ भवत , किं वान्यथापीति निर्धारणार्थम् ॥

यत्तूच्यते मदमूर्छादयोऽपि स्वप्नवदेवावस्था इति तेऽपि विचारणीया भविष्यन्तीति । तदप्यभ्युपगम्यते । काम भवन्तु तेऽपि विचारणीयाः, न तु तेषा तावता स्वप्नसाम्यं स्वीकर्तुमुचितम् । न हि मदमूर्छादयो सर्वेषां पुरुषाणां साधारणा, येन तेषा स्वप्नतौल्यं भवेत् । क्वचित्कस्यचिदेव भवन्ति मदमूर्छोन्मादादयो नैमित्तिका अवस्थाः । तेन तेषा सकलपुरुषसाधारणात्स्वाभाविकात्स्वप्नाद्वैलक्षण्यमेव युक्त स्वीकर्तुम् । एतेन समाधिरपि व्याख्यातो वेदितव्यः ॥

कि च मदमूर्छादीनामवस्थात्रिकातिरिक्तत्वामपातत एव । अन्ततो गत्वा सर्वा अप्यवस्थास्तिसृष्वेवान्तर्भवन्तीत्येव सम्यग्दर्शनम् । तथा हि–दर्शनवृत्तिरदर्शनवृत्तिरिति च परस्परव्यावृत्ते द्वे अवस्थे समनुभूयेते इत्यविवादम् । तत्र दर्शनादर्शनोभयसमधिकस्थितिस्वरूपस्य सम्भावयितुमप्यशक्यत्वात्, युगपच्चैकत्रोभयस्य विरोधादसम्भवे, सर्वासामप्यवस्थानां द्वयोरेवान्तर्भावनं न्याय्यम् । तत्र दर्शनवृत्तिरूपौ जागरितस्वप्नौ, अदर्शनवृत्तिश्च सुषुप्तिः । मदमूर्छादयस्तु यदि न जिज्ञासोरन्येषा तर्हि जागरितनिरूपणेनैव तेऽपि निरूपिता भवन्ति, दर्शनवृत्त्यवस्थापरिच्छिन्नस्वभावत्वात्तेषाम् । अथ जिज्ञासोरेव ते मूर्छादयः, तथापि दर्शनवृत्तयो वा भवेयुरथवा स्युरदर्शनवृत्तय इति जागरितस्वप्नसुषुप्त्याख्यावस्थात्रयमेव सम्यग्विचारितमलं तत्त्वनिर्णयायेति समीचीनमेवोक्तम् ॥

यत्पुनराशङ्क्यते -- सन्त्येव परे येषामनुभवोऽप्यपेक्षितव्यो परीक्षणाय, अन्यथा तत्त्वनिर्णयाभावप्रसङ्गादिति । तत्र येऽभ्युपगम्यन्ते परत्वेन, तेषामपि स्वस्यैव जागरिते समुपलभ्यत्वात् स्वजागरितपरीक्षणेनैव तेषामपि परीक्षितत्वं भवतीति न तत्त्वनिर्णयस्य कापि विकलता भवेत् तेषामपृथग्विचारणेन । अतोऽयमप्यदोषः ॥

यश्चाक्षेप. -- अनादिकालात्प्रवर्तमानस्यास्य जगतस्तत्त्वं कथं तदनन्तर्गतैकपुरुषावस्थामात्रविचिन्तनेनाध्यवसेयो भवेदिति । तदपि तत्त्वपरीक्षाप्रक्रियानभिज्ञतानिबन्धनं समुत्थानम् । न हि निष्पक्षपातं तत्त्वं बुभुत्सुना जिज्ञासायाः पूर्वमेव कालोऽनादिरिति, जगच्चानादिकालात्प्रवृत्त इति, स्वयं तु तादृशजगदन्तर्गतः कश्चित्पुरुषमात्र इति चैतत्सर्वं सिद्धवदङ्गीकृत्य तदनन्तरं तत्त्वपरीक्षाया प्रवृत्तिर्युक्ता भवेत् । देशकालनिमित्तप्रत्ययानुगतस्य जगत· स्वस्य च तत्त्व निर्दिधारयिषुणा अकस्मात्क्वचित्पक्षपाते वरघाताय कन्योद्वाह स्यादिति । अतोऽयमप्यनाक्षेपः । तस्मात्सुष्ठूक्तमवस्थात्रितयविचारे तत्त्वपरिसमाप्तिरिनि सर्वैरभ्युपेयमिति ॥

अनेन चावस्थात्रयविचारणेन बेदान्तदर्शने निर्धार्यमाणोऽर्थः - जागरितस्वप्नयोः साक्षिभूतो यः, सुषुप्तावपि स न[१] व्यभिचरति स्वरूपम् । दृश्यवस्तूनि तूपलभ्यमानदशायामप्यन्योन्य[२] व्यभिचरन्ति । सुषुप्तौ तु स्वरूपमेव तेषा न विद्यते । तस्माच्चिन्मात्रस्वरूप आत्मैव सत्य

१ मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितु ।
सम्प्रसादे द्वयासत्त्व।च्चिन्मात्र सर्वगोऽव्यय ॥ —उ०

२ अन्योन्यव्यभिचारोऽस्य वीक्ष्यतेऽनात्मवस्तुन ।
स्वरूपव्यभिचारोऽपि सुषुप्तादौ स्वसाक्षिग ॥ —वा०

तदितरन्मिथ्येति । एतदेवात्मस्वरूपं ब्रह्मेति प्रतिपादयन्त्युपनिषदः । तदेवं ब्रह्मात्मैकत्वज्ञानं तत्त्वजिज्ञासापरिसमाप्तिकरमवस्थात्रयपरीक्षण मात्रसमाधिगम्यमिति[1] परमार्थविदां विनिश्चयः ॥

**६८. जागरिते विषयाणां मिथ्यात्वं व्यभिचरद्रूपवत्त्वात्**

तथाहि:— जागरिते तावत् सर्वस्य विषयस्य ज्ञेयभूतस्य तत्त्वं मिथ्या-रूपत्वमेवात्मन आविष्करोति । कथम्? यद्रूपेण[2] निश्चित यत् तद्रूप न व्यभिचरति तत्सत्यम्, यत्तु निश्चित सदेकेन रूपेण तद्रूपं व्यभि-चरति तदनृत मिथ्याबुद्धिकल्पित इति सत्यानृतविभागे स्थिते सर्व-स्यापि जागरितगृहीतस्य मिथ्यात्वमेवास्थेय भवति । यद्यद्धि गृह्यते जागरिते तत्क्षणमपि न तिष्ठत्यविकृतमिति प्रसिद्धमेव परीक्षकाणाम् । ततश्चेदमेव वस्तुन स्वरूपमिति निश्चायकाभावे व्यभिचरत्स्वरूपो विषयः सर्वोऽपि मिथ्येत्येव पर्यवस्यति ॥

यद्यपीह भवति शङ्का — विविधविकारभाजोऽपि विषयास्त एवैते इत्यबाधितप्रत्यभिज्ञाविषया भवन्ति, तद्बलादेव तेषा सत्यत्वं परिनितिष्ठतीति । अथवा स्वरूप व्यभिचरदपि विषयजातं बुद्धिबोध्य-त्वरूपं न व्यभिचरतीति तस्य प्रकल्पत एव सत्यत्वम् । तथा च विकारिषु भवत्वनित्यतापादनम्, न च तावता तेषां सत्यत्वात्प्रच्या-वनमपि शोभन भवतीति । तथापि नेयं समुचिता शङ्का । किमिद बुद्धिबोध्यत्वमिति हि वीक्षाया न तद्बुद्धिमारोहत्यनाकुलम् । न खलु बुद्धिमात्रगम्यत्व तत्, सर्वस्य सर्वदा बुद्धौ निर्भासाभावात् ।

१ ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।
सर्वज्ञता हि सर्वत्र भवतीह महाधिय ॥ —का०

२ तै० भा० २-१

नापि घटादिकं घटादिबुद्धिगम्यमिति परिष्कारे प्रयोजनं पश्यामः। का नाम घटबुद्धिरिति चिन्तायां घटं प्रत्याख्याय घटबुद्धिर्नास्ति,[१] नापि तद्बुद्धिं विनिवर्त्य स प्रसिध्यतीत्युभयोरपि न स्वरूपस्य स्वतन्त्रस्य सिद्धिरस्ति ॥

अपि चेन्द्रियाणामेव प्रामाण्यमास्थेय विषयसत्त्वे। तेषामेवेन्द्रियाणां सत्त्वं कुत इति वीक्षायां तत्र प्रमाणं मन इति वक्तव्यम्। न च मनसस्तेषामतिरिक्तत्वे प्रमाणमस्ति। असति मनसि तेषां सत्त्वेऽनुग्राहकानुभवाभावात्, मन एव[२] तु सर्वाणीन्द्रियाणि नेत्यत्रोपपत्तिरस्ति, स्वप्ने तथानुभवात् तस्मादपि स्वतन्त्रं सत्त्वं विषयाणां नावकल्पते ॥

यत्पुनरुक्तं तदेवेदमिति निश्चितप्रत्यभिज्ञापरिप्रापितत्वादास्थेयं विषयस्य सत्यत्वमिति, तद्रभसात्। तदेवेदमिति प्रत्यभिज्ञा

१ उभे ह्यन्योन्यदृश्येते किं तदस्तीति नोच्यते।
लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ —का०
(तत्रैव च भाष्यं समीक्षितव्यम्।)

२ यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति।
एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति ॥
गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ इति ॥
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनात्मनि।
यदा विकुरुते भावं तदा भवति सा मनः ॥
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियते ह्यतः।
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥
पश्यती भवते दृष्टी रसती रसनं भवेत्।
जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥ इति च ॥ —मो०

कि साध्वी भवितुं प्रभवतीति वीक्षायां बाह्यवस्तुनि विप्रलम्भस्यापि सम्भवात् कुतो विषयस्य मिथ्यात्वमपि न स्यात्? दर्शितं च प्रागेवास्माभि' प्रत्यभिज्ञा यद्यपि व्यवहारनिर्वोढ्री, तथापि नाबाधितानुभवारूढेति । तस्मान्न प्रत्यभिज्ञा नाप्यन्यत्किञ्चिदावहति विषयस्य सत्यत्वम् ॥

सर्वमपि द्रव्यगुणक्रियाद्यन्यतममिति दिदर्शयिषया यत्पूर्वैस्तार्किकै प्रतिपादितं तत्तदपरैर्व्युत्थापितमेवेति सर्वेषां न. प्रसिद्धमेतत् । तथाधुनातनैरपि लक्षणप्रमाणादिप्रक्रिया प्रत्यग्रामारचयद्भिरपि न शक्यते विषयस्याव्यभिचरद्रूपं दर्शयितुम्। विषयस्वभाव एव हि तादृशो यदन्यथान्यथारूपस्वीकार प्रतिक्षणमिति ॥

तदेवं जागरितदृश्याना जागरित एव निरुपाख्यस्वरूपाणां यदा सत्यत्व पदं न लभते कैव प्रत्याशा सिद्धौ तस्यावस्थान्तरे तन्मुखनिरीक्षणमप्यसहमानस्य? अत एव जागरितोपलब्धस्य प्रपञ्चस्य तदवस्थया चाविनाभावं मात्रयाप्यनर्हतः स्वप्ने सद्भावो न केनापि शङ्क्यते शक्यशङ्को वा भवति ॥

६९. **स्वाप्नप्रपञ्चस्य स्फुटमिथ्यात्वम्, जागरितस्य तत्समानयोगक्षेमत्वं च :** स्वप्नेऽपि यो दृश्यते प्रपञ्चाभासः स तदवस्था मात्रलब्धसत्ताकस्तदविनाभूतश्चेति स्फुटमेव[1] तन्मिथ्यात्वम् । अभ्युपगम्य लौकिकदृष्टिमिदमुक्तम् । वस्तुतस्तु स्वप्नप्रबोधावस्थयोर्व्यपदेशभेद विना भेदकं मनागपि न विद्यते । यथा हि– जाग्रत्वेना-'

१. अविचारितसंसिद्ध क्रियाकारकलक्षणम् ।
जाग्रद्भूमावपि मतं किमु स्वप्नैकनीडगम् ॥ —वा०

भिमत स्थानं तत्कालोचितशरीरादिक तत्सम्बन्धिवस्तूनि च राग-द्वेषौदासीन्यार्हाणि यथायथमादाय विजृम्भते, भूतभव्यजाग्रत्सन्ताने ऽविच्छिन्ने एवात्मानमप्यन्त.प्रविष्ट बुद्धावारोपयित्वा पूर्वसस्कार-सम्बन्धमद्यतनानुभवे सांप्रतिककर्मफलाश्रयत्वं च भविष्यत्कालीन-जागरिते आसञ्जयति, स्वपूर्वतनाश्च स्वप्नान् केवलं मनोमयत्वेन विश्वासानर्हान् कृत्वा स्वस्मिंस्तु देशकालनिमित्तप्रतिनियमसम्पत्ति अनेक-कर्तृभोक्तृव्यवहारभूमित्वं च ख्यापयित्वा स्वसत्यत्वमविशङ्कनीय भावयति, एवमेव स्वप्नत्वेन विभाव्यमानमपि स्थान स्वकाले स्वात्मान जागरितत्वेनैव ख्यापयित्वा सर्वमपि जागरितचेष्टित यथावर्णित प्रदर्शयदृष्टमिनि सर्वेषा न. प्रत्यक्षमेतत् । प्रपञ्चितं च पुरस्तादेव यथा चैतत्तथा । न चेद स्वप्नप्रबोधयो· सर्वसाम्यं केनचिदपलपितुं शक्यम्, प्रतिवादिनोऽप्यवश्य तादृशावस्थान्तर्गतत्वात् । न हि मत्स्वप्नोपलब्ध पुरुष· कश्चित् तस्या. स्थितेर्जागरितत्वमाधातु-मीशेत । अत स्वप्नत्वमेव परमार्थत उभयोरप्यवस्थयो [1] ॥

ततश्च विषयविषयिभेददर्शनरूपे यस्मिन् यस्मिन्नवस्थाने यो य प्रपञ्च उपलभ्यते, स तत्तदवस्थाया न शक्यवियोजन इति नान्यावस्थाया तदपरिच्छिन्नस्य प्रपञ्चस्य सत्त्वम् । ततश्च न कस्यचिदपि प्रपञ्चस्य जातुचित् सत्यत्वं व्यवतिष्ठते । एवं च स्वप्नजागरित-शब्दव्यपदेश्ययोरवस्थयोरुभयोरपि तदन्तर्गतसर्वदृश्यसहितयो· सममेव स्वप्रतीतिवेलायामपि निरूपणासहत्वमन्योन्यव्यभिचारित्वं चेति यथा स्वप्नो निश्चितमिथ्याभावस्तथा जागरितमपीति न किञ्चिदन्याय्यम् ॥

१. स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिण ।
भेदाना हि समत्वेन प्रसिद्धेनैव हेतुना ॥ —का०

७०. **सुषुप्तौ सर्वविधप्रपञ्चस्यापि स्वरूपव्यभिचारः** : सुषुप्तौ पुनः स्वाप्नस्य जागरितस्य वा प्रपञ्चस्य स्वरूपमेव न विद्यतेऽतः प्रपञ्चमिथ्यात्व सुतरामुपपन्नम् । यस्य हि स्वरूप क्वचिदेव दृश्यते यथा शुक्तिरजतादे॰, सम्यङ्निरूपणे तु स्वरूपमेव नास्ति. तन्मिथ्याबुद्धिपरिकल्पितमेवेति निश्चितं लोके । तथात्रापि जागरितस्वाप्नप्रपञ्चयो॰ स्वावच्छेदकावस्थयोरेव प्रतीयमानयो सुषुप्तौ च शून्यकल्पयो मृषात्वमेव युक्त प्रतिपत्तुमिति ॥

७१. **साक्षिसत्यत्वम्** अवस्थात्रयेऽपि तु साक्षिणो न स्वरूपव्यभिचारो दृश्यते । न हि भवत्यन्य एव स्वप्नावगन्तान्यश्च प्रबुद्ध इति । येषां मते जागरित सत्य स्वप्नश्च मृषा तद्वासनानिर्मित तेषामपीक्षितु॰ स्वरूपैकत्वं स्वीक्रियत एव । येषा पुन स्वप्नजागरितयोरुभयोरपि मिथ्यात्वमेव, तेषां स्वप्ने जागरिते च चैतन्यस्वरूपस्य विशेषाभावात् स्वतो भेदो न विद्यते । परतस्तु न सम्भाव्य . परमार्थतो विद्यमानस्य मिथ्यावस्तुकृतभेदे मानाभावात् । यद्यपि स्वप्नप्रपञ्चेऽन्तर्गतमिवात्मान पश्यन्, तद्गतविविधविषयनिरूपितरागद्वेषादिक सुखदुःखे चानुभवन्, जागरितदेहतदनुबन्धिपुत्रकलत्रादिकमत्यन्तमचिन्तयश्च स्वप्नद्रष्टेति जाग्रद्द्रष्टु सकाशाद्भिन्न एव भवितुमर्हति, तथापि नैतावता जाग्रत्स्वप्नोभयसाक्षिणो भिन्नत्वं शक्यशङ्कम् । भिन्नत्वे तदुभयसाक्षित्वमेव न सिध्येत्कस्यचिदपीति ध्येयम् । तदित्थम्– सर्वथापि सर्वास्वप्यन्यदर्शनवृत्तिलक्षणास्ववस्थासु व्यावर्तमानास्वप्यनुवर्तमान , पूर्वपूर्वावस्थामुत्तरोत्तरया बाधिता भ्रान्तिस्वप्नादिकोटिपु निश्चयेन निवेशयमान॰, पूर्वापरालोचनया तदनेन सदृश विसदृशं वेति सन्दिहानोऽनुसन्दधान॰, तत्र तत्र वस्तूनि तदेवेदमिति

प्रत्यभिजानंश्च न कथञ्चनान्योऽन्यो भवितुमर्हति । तत्सिद्धं साक्षिणः स्वरूपस्य परमार्थतोऽपि सत्यत्वं स्वदृश्यप्रपञ्चास्पृष्टत्वमत एव शुद्धचैतन्यरूपत्वं चेति ॥

**जाग्रत्स्थानं न सत्यं कथमपि न च तद्भेदकं लक्षणं वा**
**स्वप्नादुन्नीयतेऽतः सविषयमखिलं स्वप्न एवेति सिद्धम् ।**
**स्वप्नोऽयं सप्रपञ्चं भजति विलयमात्यन्तिकं यत्सुषुप्तौ**
**मिथ्यास्वप्नात्परोऽसौ विलसति विमलः सर्वदृक्सच्चिदात्मा॥**

७२. **व्यवहारविरोधपरिहारः** यद्यपि घटपटादिकं सत्यमित्येव प्रतियन्ति व्यवहरन्ति च प्रतिपत्तारः । तत्सत्यत्वे च न तस्यैव मिथ्यात्वं युक्तम् । तथापि व्यवहारविरोधोऽयमापातत एव न तु भाविक इति ज्ञेयम् । एकस्यामेवावस्थायां हि मरीचिकातोयादीनि तत्प्रत्यक्षोत्तरकालं ज्ञानान्तरबाधितानि भवन्तीति विमृशन्तो लौकिकास्तद्विपर्ययेण यावत्तत्तदवस्थं स्थिरतया भासमानानि प्रतीत्यनुरोधात्सत्यानीत्येव कल्पयन्ति । न तु तेषां पदार्थानां सत्यत्वमपि वास्तवेनैव वृत्तेन । तेनाविरोधः ॥

ननु तेषां मिथ्यात्वकल्पनातो वरं वैपरीत्यमेव कल्पितं प्रतीत्यनुसारेण । न हि ते प्रमाणसिद्धा न भवन्ति, येन मरुमरीचिकासलिलादितौल्यमारोप्येरन्निति चेत् । स्मर्तुमर्हसि परमार्थसत्यत्वे प्रयोजकं पुरस्ताद्दर्शितम् । न हि वयं प्रमाणगम्यं सत्यमित्युररीकृत्य प्रपञ्चसत्यत्वं व्यासेधामो, येन स्ववचनविरोध आपाद्येत। प्रमाणगम्यस्य सत्यत्वे प्रमाणस्यापि प्रमाणगम्यत्वेनैव सत्यतायाः प्रतिपादनीयत्वात् स्वगम्यत्वे स्वात्माश्रयणम्, स्वव्यतिरिक्तप्रमाणगम्यत्वेऽपि तत्रापि शङ्काप्रसारादपर्यवसाने पर्यवसानं वा स्यात् । अपि च प्रमाणमपि

प्रपञ्चान्तःपात्येवेति प्रपञ्चस्य सत्यत्वासत्यत्वविप्रतिपत्तौ को वावसर प्रमाणोपन्यासस्य? न हि प्रपञ्च प्रपञ्चगम्य इत्युरीक्रियते केनचित्. सर्वदा स्वव्यतिरिक्तज्ञानगम्यस्य स्वप्रकाशत्वाभावात् । तस्मान्न प्रमाण-गम्यत्वं सत्यत्वे तन्त्रम्. किं तर्ह्यव्यभिचरितस्वरूपत्वमेव । तादृश च सत्यत्व नार्हति प्रपञ्च । तस्मात् प्रतीतिमात्रस्य भ्रान्तिसिद्ध-वस्तुन्यपि सम्भवात् सार्वदिकप्रतीते प्रपञ्चेऽपि वक्तुमशक्यत्वा-न्नास्ति व्यवहारविरोधः ॥

७३. **सत्यानृतमिथुनीकरणरूपाध्यास एवाविद्या** उप-दर्शितमार्गेण परस्परमत्यन्तविरुद्धस्वभावयोरात्मानात्मनो सत्यमिथ्या-स्वरूपयोस्तत्त्वानवबोधादेव परस्परात्मतां परस्परधर्मतां च प्रतिपद्य व्यवहरति लोक. स्वभावत एव । पश्चात्तु सम्यग्विचारणान्न केवल-मसम्बन्धमेव सर्वथा तयो. पश्यति, कि नाम सत्यमिथ्याविभागोऽपि[1] मिथ्यावस्तुवदात्मस्वरूपानवबोधनिमित्त एवेत्यवगच्छति । यथेह लौकिक कश्चिच्छुक्तिकाज्ञानसमसमयं न केवल रजताद्विविक्तत्वं शुक्ते पश्यति, किमन्यत्, एकस्मिन्नधिकरणे शुक्तिरजतरूपद्रव्यद्वयसंस-र्गोऽपि मिथ्यैवेति निश्चिनुते तद्वत् । एवमविचारस्वभावप्राप्तमात्मा-नात्मनोर्युगलीकरण बुद्धौ पश्चात्तनसम्यग्ज्ञानबाध्यत्वादज्ञानं मिथ्या-ज्ञानमविद्येत्यादिशब्दैर्व्यवह्रियते[2] वेदान्तसम्प्रदायविद्भि. तन्निवृ-

१ सत्यासत्यविभागोऽयमविभागात्मवस्तुनि ।
प्रत्यगज्ञानहेतूत्थस्तद्बोधादेव तद्धतिः ॥

२. तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते ॥ —सू॰ भा॰
श्रूयतां चाप्यविद्याया स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्या . . ॥ —वि॰ पु॰

त्तिका च बुद्धिवृत्तिर्ज्ञानं सम्यग्ज्ञान विद्येत्यादिशब्दैः । इत्येवं सङ्ग्रहेणोपन्यस्ता वेदान्तविदां प्रक्रिया सर्वदोषास्पृष्टा ॥

## अथ जाग्रति प्रपञ्चोपलम्भविचारः

७४. **सुषुप्तिसमये तद्बहिर्भूतः प्रपञ्चो न विद्यते** कथं पुनर्दोषैरनुपस्पृष्टेयं प्रक्रिया? सुषुप्तौ प्रपञ्चो नाभावमपिगन्तुमुत्सहते, अपिगच्छन् वा नाकस्माज्जागरिते पुनरुपलब्धिगोचरो भवितुमर्हतीत्युक्त शङ्कावादिना । तत्र क. समाधिरिति चेत् । न वय जागरिते विद्यमान' प्रपञ्च प्रसुप्तौ गच्छत्यभावतामित्याचक्ष्महे, कि तु जागरिते दृश्यमान. प्रपञ्चस्तदवस्थासम्बद्ध एव नान्यत्रोपलभ्यते विद्यतेवेति ॥

मा नामोपलभ्यताम् । तथापि खलु सुषुप्तिस्थानाद्बहिरेव कुत्रचिद्भाव्य तेन । अन्यथा कथमुदीयात्प्रबोधे भूयोऽपीति चेत् । को भाव? सुषुप्तावपि तद्बहिर्भूतमाश्रयान्तरं प्रपञ्चस्य विद्यत इति वा, अहोस्वित् प्रबोधप्रपञ्चोपलम्भस्य कारणं वक्तव्यमिति वा । यद्यादिम. कल्प. कथ विदितमाश्रयान्तरसत्त्वं श्रीमता? न हि तदापि विशेषविज्ञानवान् भवान् । ननु सन्त्यन्ये प्रबुद्धा., प्रमाणं भविष्यन्ति ये मत्सुप्तिकालेऽपि प्रपञ्चो विद्यत इत्यत्र । तथा हि लोकव्यवहार' 'शिवरात्रावह सुष्वाप तदानीमयं तु जजागारे'ति । तत्किं कारणमुपेक्ष्यते तेषामनुभव इति? अत्रानुयोज्योऽसि – किं तेऽप्यन्ये त्वज्जागरितप्रपञ्चान्त.पातिन. कि वा नेति? यद्यन्तर्वर्तिन स्तेऽपि त्वज्जागरितप्रपञ्चस्य, ततः कथमर्हन्त्युपलब्धुं किञ्चिदपि त्वत्सुषुप्तौ? तेषामपि खलु सत्त्वं त्वज्जागरप्रपञ्चसत्त्वतुल्ययोगक्षेम

मेव । न चास्त्यन्यः प्रपञ्चानन्तर्भावीति[1] निष्प्रमाणिकैव त्वज्जागरितावच्छिन्नप्रपञ्चस्य सत्ता स्वापेऽपि । अतो जाग्रत्प्रपञ्चो जाग्रत्सहभावी न तयावस्थया विना निमेषमपि स्थातुमेकाकी शक्नोतीति बोध्यम् ॥

**७४. जाग्रत्प्रपञ्चस्य तदवस्थाप्रतिबद्धत्वे विचारः :** न चैव मन्तुमुचितम् — जागरितप्रपञ्च इति विशेषणं विद्यमानप्रपञ्चप्रद्वेषिणा प्रक्षिप्यते । प्रपञ्च एवायं वस्तुतो न जागरितप्रपञ्चः । तस्माद्विनापि जागरितं शक्नुयादेवावस्थातु क्वचिदन्यत्र जागरितादपीति । यस्माज्जागरिते यः प्रपञ्च इति व्यपदिश्यते जातुचिदपि जागरितमपहाय स्थित्यन्तरे न दृष्टचरः केनचित्, कथमसौ निर्विशेषणमेव प्रपञ्च इति सामान्यवाचिनाभिलप्येत? तथा हि— न कोऽप्येनं प्रपञ्चं स्वप्ने द्रष्टुं प्रतीक्षते स्थवीयोबुद्धिरपि । तत्कुतः? नूनं तदात्वे तत्र प्रपञ्चस्यात्यन्तमभावतामसम्भाव्यमानसत्ताकत्वं च निश्चितवन्तो लोकाः ॥

अथैवमाग्रहः -- विशिष्टस्य यद्यपि सर्वत्र सम्भवो नास्ति । तथापि विशेष्यस्य सम्भवत्याशङ्का । यथा नीलोत्पलमेकत्र दृश्यते, अन्यत्र तु रक्तोत्पलम् । एवमेव जागरिते जागरितप्रपञ्चो दृश्यते, स्वाप्नश्च स्वप्न इति । अहो पक्षपातोऽत्यन्तासम्भाविते! यतोऽत्र विशेष्यमेव न सिध्यति विना विशेषणमित्यधस्तादुपपादितम् । प्रप-

१ यदा सुप्त स्वप्नं न कश्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभि सहाप्येति चक्षु सर्वै रूपै सहाप्येति श्रोत्रं सर्वै शब्दैः सहाप्येति मन सर्वैर्ध्यानै सहाप्येति ॥ —कौ० उ०

(जागरितप्रपञ्चान्त पात्यप्रविलीनं सुषुप्तौ न किञ्चिद्बाह्यतो वर्तत इति श्रुतेरर्थ ॥)

ञ्चत्वेनाभिमतः सिध्यन् खलु न कदापि सेद्धुमर्हति विना तत्साक्षिण-मनुभवितारम् । स चानुभवितावश्यं भविता जागरित स्वप्न वानुभवन्निति, तादृशानुभवाभावेऽपि कुतः शङ्काननुभूयमानस्य प्रपञ्चस्य ' न चान्ये सन्ति स्वप्नवेलाया स्वप्नबहिर्भूता ये पश्येयु प्रपञ्च द्रष्टु-मिति शक्यमास्थातुम् , कथितदोषानुषङ्गात् ॥

तदेव स्वप्न एवात्यन्तमनिरीक्षणीयस्वरूपस्य जाग्रत्प्रपञ्चस्य कुतस्तरां सद्भावाशङ्का सुषुप्ते सकलदृश्यव्यासेधरूपे ? तस्मान्न सुप्तौ न वा तद्बहिः शक्यशङ्कं सर्वथा जागरितप्रतिबद्धस्य प्रपञ्चस्य सत्त्वम् ॥

**७४. जागरितेऽपि मिथ्याप्रपञ्च एवावभासते शुक्तिरज-ताद्विवत् :** अथाभिप्रेयेत–नाय सुषुप्तौ प्रपञ्चसद्भावमङ्गीकारयितु यत्न., कस्तर्हि सुषुप्तावविद्यमानस्य प्रपञ्चस्य जागरिते पुनरुदये हेतुं बुभुत्सो' प्रश्न इति । अत्र व्याचष्टां भवान् पुनः शब्दस्वारस्यम् । ननु य एव प्रपञ्चोऽनुभूत' पूर्वजागरिते स एवोत्तरस्मिन्नपि पुनरुदेति, तत्कथमु-पपद्यतां सुषुप्तौ विच्छिन्नसत्ताकस्येति पृच्छामीति चेत् । बाढं कुश-लोऽसि विचारणे । प्रपञ्चस्य सत्यत्वतदन्यत्वावधारणे प्रवृत्तः कि कारणमादावेव सिद्धवत् तस्य दण्डायमानसत्त्वं स्वीकरोषीत्यत्र तु दीयतां कृपादृष्टिः । स्मर्तु चार्हसि यत्प्रागेव निरासि प्रत्यभिज्ञाबला-देकत्वनिर्धारणयुक्तिरिति ॥

**७५. प्रत्यभिज्ञाबलान्न जागरितप्रपञ्चैक्यं सेद्धुमर्हति :** स्यादेतत्–प्रत्यभिज्ञानिरसनं यत् कृतं प्राक्तन्न वस्तुतो निरूपण-सहम् । तथाहि–तदेवेदमिति निश्चिततद्भावमवगाहयन्ती संवित् किमित्युपेक्ष्यते ? ननूक्तं तत्र कारणं तदिति पारोक्ष्यप्रतीतिः, इद-

मिति चापरोक्ष्यप्रतीतिः, तयोर्विरुद्धधर्मवतोरैक्यं न सम्भवतीति । सत्यमुक्तम् । अयुक्त तु तत्, विरुद्धधर्मयो॰ संसर्गस्यैकस्मिन् ज्ञाने दृष्टत्वात् । सम्भवति ह्यनुमानमयं पर्वतो वह्निमानिति । तत्रायमिति प्रत्यक्षत्व प्रत्याययति वह्निमानिति च पारोक्ष्यम् । तयो॰ संसर्गो दृश्यते । तस्माद्दृष्टान्तभावादयुक्तमिदं प्रत्यभिज्ञाप्रत्याख्यानं तर्कमात्रेण । न च विषयभेदात् प्रत्यभिज्ञान नैकं भवितुमर्हति, ततः प्रामाण्यविकलतेति शङ्कयम्, उक्तदृष्टान्ते विषयभेदस्यापि सत्त्वात् । नापीत्थमुत्थाप्या शङ्का - तदिति स्मरणम्, तस्य च संस्कारजन्यत्वमस्ति । अयमिति प्रत्यक्षानुभव॰ । एवं संस्कारेन्द्रियसयोगरूपभिन्नसामग्रीकत्वात् प्रत्यभिज्ञा न भवत्यभिन्न ज्ञानं किं तु स्मरणानुभवे द्वे एव ज्ञाने मिलित्वा प्रत्यभिज्ञाशब्दव्यपदेश्ये इति । तत्रापि दृष्टान्तभावात् । उदाहृतं पर्वतो वह्निमानिति ह्यनुमानमेकम् । तत्र लिङ्गज्ञानमनुमानमात्रकारणमिन्द्रियसयोगश्च प्रत्यक्षहेतुः । उभयं मिलित्वा भवत्येकस्यैवानुमानस्य वह्निमानयं पर्वत इत्याकारस्य हेतु॰ । तस्मात् प्रत्यभिज्ञेति न ज्ञानद्वयम्, न वा लौकिकानां भ्रान्तिः; किं तर्हि, विश्वासार्हमेकमेव ज्ञानमिति ॥

एतदप्यार्तम्, उक्तदृष्टान्ते ऐक्यवादिन एव दौस्थ्यात् । तत्र हि पर्वतांशे नास्त्यनुमेयत्वं किं तु वह्न्यंश एव । सर्वत्रापि ह्यनुमाने यत्किञ्चित् प्रत्यक्षपूर्वकत्वमस्त्येव । न चैतावता प्रत्यक्षस्याप्यनुमानत्व शक्यानुमानम् । तत्रानुमाने पारोक्ष्यम्, लिङ्गज्ञानजन्यत्वम्, स्वासाधारणविषयत्वं च विद्यते । प्रत्यक्षादिसंसर्गस्त्वन्यथासिद्धमिति न केनचित्तार्किकेण शक्यं कुत्रचिदप्यनुमाने प्रत्यभिज्ञानसमानयोगक्षेमत्वं प्रदर्शयितुम् । अतः स्मरणानुभवज्ञानद्वयत्वेन सकालानुभववेद्य

न भवितुमर्हत्येकं ज्ञान, दूरेतरां तत्प्रामाण्यबलात्प्रपञ्चस्यैकत्वाध्यवसाय इति। न चैवं प्रमाणस्य प्रमेयस्य वा तत्त्वेन प्रत्यभिज्ञाभावप्रसङ्ग , ततश्च सर्वविधव्यवहारलोपप्रसङ्गश्चेति शङ्कनीयम्, प्रमाणप्रमेयव्यवहारस्य क्रियाकारकफलाभिसम्बन्धव्यवहारस्य च सर्वलोकसिद्धस्य तत्त्वनिर्धारणमात्रेण कस्यचिदपि व्यवहारलोपस्य प्रसक्त्यभावात् । न हि तत्त्वविचारकः प्रपञ्चस्वभावमन्यथयितुमुद्युङ्क्ते शक्नोति वा तथा कर्तुम्, किं तु स्थितस्यैव तत्त्वं बुद्ध्या निश्चेतु यतते । अतो न व्यवहारलोप । तत्रैव सति प्रपञ्चस्यैकरूपतेव नाद्यापि सिद्धेति तत्पुनरुदयसिद्धौ हेतु पर्यनुयुज्यत इति कथं युज्यते?

७६. **प्रपञ्चोपलम्भ आविद्यक एव :** ननु सुपुप्तावत्यन्तमविद्यमानः प्रपञ्चश्चेत् कथं तस्योपलम्भ. प्रबोधे? यदाप्युच्यते न स एव प्रपञ्च. प्रतिजागरित प्रतीयत इति । तदानीमपि व्याख्यातव्यं केन कथमुदपादि नव्योऽद्यतनप्रबोधप्रपञ्चो ह्यस्तनप्रपञ्चप्रतीकाश इति। न ह्यकस्मादेवोत्पतिष्णु' प्रपञ्च इति युक्तमिति चेत्। शुक्तिरजत पूर्वदृष्टसजातीयमिव स्वात्मानमाभासमानं कथ केनोत्पाद्यते? यदि तु मन्यसे—तत्र रजतं नास्त्येव परमार्थत., मिथ्यावस्तुगृहयालुना तु भ्रान्तमनसा केवलं विकल्प्यत इति । तुल्यमत्रापीति तुष्यतु श्रीमान्। यस्तु नवीनवेदान्तिभुजमवलम्ब्य वदेत् तत्रास्त्युपादानभूतमज्ञानम्, तेन तत्र रजतोत्पत्तिरुपपद्यत इति । स तु सविदनुसारिणामुपहास्य पूर्वखण्डोक्तयुक्तिभिः शुक्तिरजतोत्पत्तिनिरासप्रकारैर्वक्तव्यैश्च प्रबोधनीयः ॥

ननु तथापि सुपुप्तेऽनुभवानर्हस्य कथमप्यशङ्कितसद्भावस्य प्रपञ्चस्य कथमकस्मादेव स्याज्जागरे जनिः? शुक्तिरजतदृष्टान्ते तु

चक्षुर्दोषो विद्यते मिथ्याप्रतीत्युपस्थापक इति वैषम्यम् । न हि सुषुप्ते कश्चिदपि दोष स्वीकुरुते भवान् सौषुप्तमूलाविद्यामपि निराकुर्वन्, यो दोषो जागरिते प्रपञ्चप्रत्युपस्थापको भवितु प्रभवेत् । मैवम्. मुक्तदृष्ट्या मिथ्याभूतस्यापि प्रपञ्चस्य बद्धेनानुभूयमानत्वदर्शनात् । ननु तत्रापि मुक्तस्याज्ञानं नास्तीतरस्य तु तदस्तीति वैषम्यम् । किं च मुक्तोऽन्यः पुरुष , बद्धश्चापर इति भिन्नविषयत्वात् प्रपञ्चानुभवतदभावौ न विरुध्येते । इह पुनरेकपुरुषविषयकौ तौ कथ न परस्परं विरुन्धः? एतदपि नास्ति वैषम्यम् । अत्रापि खलु नाङ्गीक्रियते सुषुप्तावविद्या. प्रबोधे तु स्वीक्रियते । भिन्नावस्थाविषयत्वादेव च प्रपञ्चोपलम्भ-तदभावयोरपरस्परविद्वेषः । नन्वेवमप्येक एव स्यादत्र भिन्नावस्थावान् । बाढम् । तथाप्येकस्यैव बद्धावस्थायां प्रपञ्चप्रतिभासो मुक्तावस्थाया तु नेति विद्यत एव दृष्टान्ततौल्यम् । अस्त्वेवम् । तथापि मुक्तो वेदा-न्तप्रमाणजनितपरमार्थबुद्धित्वान्नोपलभते प्रपञ्चम् । बद्धस्त्वज्ञानकल्पित मनुभवतीत्युपपद्यते दृष्टान्तः । अत्र पुन. स एव बद्धो मुक्तश्चेत्याप द्यते । न हि सुषुप्तौ मुक्त सन् पुन प्रबोधे सति बद्धो भविष्यतीति भावना भव्या स्यात् । अतो विलक्षणमिद लक्ष्यत इति चेत् । अवहितमनाः शृणु । नास्माभिरुच्यते सुप्तौ मुक्त. सन् प्रबोधे बद्धो भवतीति । कथ तर्हि, सदा मुक्तस्वरूपोऽप्यविचारितात्मयाथात्म्यो बन्धमात्मनि यथा कल्पयति । एवमेव सुप्तौ प्रपञ्चाग्रहण प्रबोधे[1] च प्रपञ्चसत्यत्वं चाभिमन्यते सदा निष्प्रपञ्च एव सन् इति । तस्माददोषः ॥

१ स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्था प्रतिगमन बाह्यविषय-प्रतिबोधोऽविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशादाहनिमित्तमित्यवोचाम ॥

—छा० भा०

## प्रपञ्चमिथ्यात्वे शङ्का तत्परिहृतिश्च

**७७. प्रपञ्चमिथ्यात्वं न व्यावर्तमानत्वात्, न वा बाध्यत्वादिति शङ्का :** प्रपञ्चस्य वर्णित मिथ्यात्वमुपश्रुत्य कश्चिदसहिष्णुः शङ्कते – यदत्राध्यवसितं मिथ्यात्वं तत्तर्कपराहतम् । तथा हि – किमात्मनोऽनुवर्तमानत्वाद्व्यावर्तमानत्वाच्च प्रपञ्चस्य तथात्वम्, उतान्यस्मादेव कुतश्चिद्धेतो ? आत्मानात्मसम्बन्धविरहश्च प्रतिज्ञातः किं हेतुक ? किमनुपपत्त्या किं वा कारणान्तरादेवेति ? सर्वथा साध्यद्वयमपि दु साधमेव न प्रतिभाति ॥

कथंकृत्वा दुःसाधम् ? यत्तावदुच्यते व्यावर्तमानत्वान्मिथ्यात्वमिति, तत्र यदि यत कुतश्चिदन्यद्वस्तु व्यावर्तमानशब्दाभिलप्यं तदानीमात्मापि मिथ्या भवति । यदि यत्र कुत्रचिदभाववत्त्व व्यावर्तमानत्वम्, तत शुक्तिरजतादेरपि सत्यत्व प्रसज्यते । विद्यते हि रजतमापणादाविति । यदि तु नाशवत्त्व व्यावर्तमानत्वम्, तदा नष्टो मिथ्येति पर्यायत्वप्रसङ्गः । नेद रजतमिति बाधदशाया न हि कश्चिद्ब्रूयान्नष्टं रजतमिति । प्रतिपन्नदेश एव निषेधार्हमुच्यते व्यावर्तमानमितीत्यपि न साधु । तथा सति यथा नायं सर्प इति स्वदेशे भुजङ्गो न विद्यत इति कृत्वा बाध्यमानमुच्यते, तद्वत् प्रपञ्चस्यापि नायं प्रपञ्च इति बाध प्रसज्येत । न चेष्टापत्त्या परिहार्यः प्रसङ्ग । सर्पादिप्रतीतेरिव प्रपञ्चप्रतीतेरपि विनाशस्य त्वयानभ्युपगमात् । अथ कदाचित्कचिदेव प्रतीयमानत्वमेव व्यावर्तमानत्वमिति मतम्, तन्न । यत्र कुत्रचिद्देशे काले वा यत्प्रतीयते तत् तत एव सत्यमिति हि सिध्यति । यदि मन्यसे कचिदप्रकाशात्प्रकाशो मिथ्येति । तदा कचित्प्रकाशभावविरोधादप्रकाश एव

मिथ्येति कस्मान्न भवेदिति प्रश्नो दुरुत्तरणीय स्यात् । किञ्चात्मप्रकाशोऽपि न सार्वदिक । ज्ञानोपदेश एव हि स्यादनर्थको यद्यात्मा संसारदशायामपि प्रकाशेत । ततश्च कचिदेव प्रकाशवत्त्व यदि व्यावर्तमानत्व मिथ्यात्वप्रयोजकम्, आत्मापि मिथ्येत्युक्त स्यात् । न चान्योऽस्ति प्रकारः, येन व्यावर्तमानत्व लक्ष्येत । तस्मान्मन्यामहे न व्यावर्तमान मिथ्येति ॥

एतेन स्पष्टमेव यद्बाध्यत्वमपि न हेतुर्मिथ्यात्व इति । सर्पादीनां बाध्यत्व हि नाम स्वरूपव्यतिरेकभूतरूपविनिश्चयः । मिथ्यात्व च तत्र स्वरूपाभावनिश्चय. । न तथा प्रपञ्च कचन किञ्चन बाध्यतेऽतो न मिथ्या भवितुमर्हति । तस्मान्नास्त्येतन्मिथ्यात्वम् ॥

७८. **आत्मानात्मसम्बन्धानुपपत्तिरिति पक्षे शङ्का :** सम्बन्धानुपपत्तिरप्येवमेव प्रोत्सारणीयः । कथ? इद तावद्विमर्शमर्हति — कि सम्बन्धानुपपत्त्या मिथ्यात्व निश्चीयते, उताहो मिथ्यात्वनिश्चयादेव सम्बन्धानुपपत्ति. साध्यत इति । यदि सम्बन्धानुपपत्ति हेतूकृत्यैव मिथ्यात्वनिश्चितिः, तदा सम्बन्धानुपपत्तिर्निर्वाह्या भवति ॥

स्यादेतत् — संयोगसमवायादीनामन्यतमस्यापि सम्बन्धस्य न सम्भवोऽस्ति प्रकृते । यस्मादात्मा न द्रव्य न च कार्यकारणभावो युज्यत आत्मानात्मनोः । अत. सम्बन्धानुपपत्तिः नाशक्यनिर्वाहेति । तदयुक्तम्, अबाधितप्रत्यक्षसिद्धस्य सम्बन्धस्य कतिपयविकल्पासहत्वादेव निषेधायोगात् । यदि परिदृश्यमान. सम्बन्धोऽनुपपन्नस्तर्हि सम्बन्धान्तरमेव कल्प्यताम् । कल्प्यमानोऽपि इतरसम्बन्धवदनुपपन्न एव भातीति चेत् । सम्बन्धानुपपत्तिं प्रकल्प्य तद्बलाद्दृश्यबाध प्रत्यक्षविरुद्धं कल्पयन्तं कस्मान्नानुपपत्तिः प्रतिभायात्? अपि च

सम्बन्धानुपपत्त्या यदि प्रपञ्चस्य मिथ्यात्वं तत एव कारणादात्मनोऽपि मिथ्यात्व किं न स्यात्? तस्मात्सबन्धानुपपत्तेरनिर्वाहाम् तदाश्रयणेन न मिथ्यात्व युक्त स्वीकर्तुम् ॥

अथोच्यते-- मिथ्यात्वनिश्चयादेव सम्बन्धानुपपत्तिरस्त्विति । न हि सत्यमिथ्यास्वभावयोर्वास्तविक कश्चित्सम्बन्धः शक्याभ्युपगम इति । तत्र मिथ्यात्वावगम एव कुतः? दर्शितो हि हेतोरभावो मिथ्यात्वानुमाने प्रागेवेति ॥

अथवा स्यात् -- यदि प्रपञ्च· परमार्थसत्य· स्यात् तत आत्मानात्मनोः सम्बन्धाभाव· प्रसज्येत तस्मान्मिथ्या प्रपञ्च इति । तदपि नोपपद्यते, मिथ्याभूतस्यापि प्रपञ्चस्यात्मना सम्बन्धानुपपत्तेरनिवार्यत्वात् । यदि तत्रोपपद्यत आरोपित सम्बन्ध·, भवत्विहापि तथैव ॥

अपि चान्यत् -- उपपद्यते चाय सम्बन्धस्ततो मिथ्यात्व प्रपञ्चस्यान्यथानुपपत्तेरिति वा, उपलभ्यते चायं सम्बन्धस्ततो मिथ्यात्वमेव प्रपञ्चस्य, अन्यथा तदनुपपत्तेरिति वा विवक्षितम्? उभयथापि दोषग्रास· सम एव । यदि हि सम्बन्धोऽभ्युपगम्यते तत एव सम्बन्धी प्रपञ्चोऽङ्गीकरणीय· । अथोपलभ्यत इति सम्बन्धिमिथ्यात्वमिष्यते तदा सत्यसम्बन्धिनो· क्व दृष्टा व्याप्तिर्नास्ति सम्बन्धोपलम्भ इति? तस्मान्न प्रपञ्चमिथ्यात्वमध्यवसातु योग्यम् । नाप्यात्मनात्मनो· सम्बन्धो नोपपद्यते । तत्सिद्धं तर्कविरुद्धमेतत् प्रक्रियारचनमितीति ॥

**७९. जागरितप्रपञ्चमिथ्यात्वम् :** तदिदमकाण्डे ताण्डवितम् । यत्कारणं प्रपञ्चस्य सत्यत्वमातिष्ठमानैरवश्यं वक्तव्यं भवति

कस्य प्रपञ्चस्य सत्यत्व विवक्षितमिति । दृश्यन्ते हि[1] पर शत प्रपञ्चा स्वप्ने । सङ्कल्पप्रपञ्चाश्च सन्त्यगणिता । यदि ब्रूषे – न स्वप्नप्रपञ्च साङ्कल्पिको वात्राभिप्रेत., को नाम, जागरितदृश्य एवेति । तदा जागरितावच्छिन्नस्य तस्य कथ निरपेक्षसत्यत्वमुदीर्यता तदवस्थातोऽन्यत्रासत्त्वमपि पश्यता? अनुभूतिकाले विद्यमानवद्भासमानस्य सत्यत्वमातिष्ठमान शुक्तिरूप्यस्य स्वाप्नपदार्थादेर्वा कस्माद्धेतो र्न मृष्यते निरपेक्षसत्त्वम्? ननु समानयोगक्षेमत्वमेव सर्वेषाम्? तस्मान्मृषात्वमेव प्रपञ्चस्य स्वावच्छेदकावस्थातोऽन्यत्रालभ्यसत्त्वस्येति ॥

नन्वन्यत्रासत्त्वं न मृषात्वे तन्त्रम्, इतरथा हि रूप्यस्यापणेऽपि सत्त्वाच्छुक्तिकाया तस्य सत्यत्वमापतेदित्यावेदितम् । सत्यमावेदितम् । तत्रापि तु प्रतिपन्नोपाधेरन्यत्रासत्त्वमेव रूप्यस्येति युक्तमुत्पश्याम' । न हि शुक्तिकायां प्रतिभासमानमेव तद्रूप्य यद्विद्यत आपणादौ । किं तद्वन्यदेव पारमार्थिकत्वेनाभिमत लौकिकानाम् । अपरथा 'नात्र रजतमस्ति, किं त्वापणे वर्तते'– इत्येव बाध स्यात् । तस्माद्व्यभिचरितस्वरूपत्वात्प्रपञ्चस्य मिथ्यात्वमेव साधीय साधयितुम् ॥

**८०. स्वप्नप्रपञ्चोऽपि सत्यः यतो मिथ्याज्ञानमेव नास्तीति**

**शङ्का :** अथास्त्वपर' पक्ष - नास्माभिः प्रपञ्चसत्यत्ववादिभि. स्वाप्नप्रपञ्चस्यापि मिथ्यात्वमिष्यते । सर्वस्यापि ज्ञानस्य याथार्थ्यमेव हि न्यायविदां सम्मतम् । यत्तूदित रूप्यत्वेनाभिमतायां शुक्तौ तदभावत्वनिश्चयात् पश्चा-

१ यथा सम्प्रतिभासस्थ स्वय ससारखण्डक ।
तथा तेषा सहस्राणि मिथ्यादृष्टानि सन्ति हि ॥
स्वप्नसङ्कल्पनगरव्यवहारा परस्परम् ।
पृथग्यथा न दृश्यन्ते तथा ससृतिविभ्रमा ॥ —वा०

द्बाविप्रत्ययेन पूर्वविज्ञानं मिथ्यार्थविषयमिति। तदसारम्। यस्माद्रूप्यादे शुक्तिकादौ सत्त्वमेव न्याय्यमभ्युपगन्तुम्। तत्र तत्प्रथाया अन्यथानुपपत्ते। न चैवं सर्वस्य सर्वत्वापत्त्या व्यवहारविलोपनं स्यात्, न हीयं शुक्तिरिद रजतमिति व्यपदेशभेदस्य व्यवस्थापकं किञ्चिदेष्टु शक्यते सर्वज्ञानयाथार्थ्यवादिनेति शङ्कनीयम्। तत्तदंशभूयस्त्वाच्छुक्तीरजतमित्यादिनिर्देशभेदस्य सूपपादत्वात्। तत्र यदा दोषवशाच्छुक्त्यंशमुज्झित्वा रजताशमेव गृह्णाति चक्षु., तदा भवति रजतबुद्धि.। सैषा भ्रान्तिरिति निगद्यते लौकिकैर्दोषजन्यत्वात् तदपाये विलुप्तत्वग्रहणाच्च। नन्वेवं शुक्तिवद्रजतस्यापि सत्यत्वे कथ रजतबुद्धिशुक्तिबुद्ध्योर्बाध्यबाधकभाव? भूयस्त्वादित्यवेहि। यदा खलु निर्गतकरणदोषेण गृह्यते शुक्तिभूयस्त्वं साकल्येन, तदा अल्पीयस्त्वाद्रजताशस्याग्रहे सति युज्यत एव तद्बुद्धेरपि बाध्यत्वम्। एवं सर्वत्रापि भ्रमे शक्योपपादने सत्यनर्थिकैव सत्यमिथ्यार्थविभागकल्पना। ततश्च स्वाप्नप्रपञ्चस्यापि न मिथ्यात्वमुपपद्यते॥

ननु स्वप्ने शतयोजनविस्तीर्णं भुवनतलमुपलभ्यते। तत्कथमवकल्पतामन्त.शरीरे परिच्छिन्नायामविस्तारे स्वप्नं पश्यतः? सुदूरस्थित च देश गत्वा तत्रत्यान् विषयानुपलभते तदा स्वप्नदृक्। तदपि कथमुपपद्यतामपेक्षितकालदैर्घ्याभावात्? अपि च तादृशदेश गतमिव स्वात्मानमुपलभमानस्य प्रबोधोऽपि न तद्देशे भवति, क्व तर्हि यत्र शयितस्तत्रैव भवति। किं च स्वप्नदृक् प्रचरन् यै· सङ्गत इव भवति मित्रादिभि परमार्थतो न तैर्गृह्यते। गृहीतश्चेन्नूनमुपलब्धवन्तो वयमायुष्मन्तं स्वप्न इति ब्रूयु. पृष्टाः। न त्वेतदस्ति। तस्मान्नेद भजमानं स्वप्नानुभवस्य सत्यत्वमिति चेत्। शृणु। यद्यपि दूर-

देशादिगमने समुचितकालाद्यभावः, तथापि तत्र तत्तत्पुरुषमात्रानुभाव्यास्तत्कालावसायिनस्तत्तत्पुण्यपापानुगुणं सत्यभूता एवार्थाः सृज्यन्त ईश्वरेणेत्यभ्युपगम्यते, आगमप्रामाण्यात्। तस्मान्न मृषा स्वप्नप्रपञ्चोऽपि, किमु जागरितप्रपञ्च इति ॥

८१. **मिथ्याज्ञानमप्यङ्गीकरणीयम् :** तदेतल्लौकिकप्रमाणचणसाधारण्येन सिद्धस्याप्यनुभवस्यापलापं कुर्वतां स्वोपज्ञ प्रक्रियारचनमविचाररमणीयम्। यदि हि याथातथ्येनाभविष्यदेव रूप्य शुक्तौ तदद्धा कदाचिदग्रहीष्यत लौकिकैः परोक्षकैर्वा। न त्वेतदस्ति। रजतं हि चेन्मात्रयापि समभविष्यच्छुक्तिकायां तदा यः कश्चिद्भौतिकशास्त्रवेत्ताऽशक्ष्यदपि रूप्यस्य सत्त्वमवगमयितुमस्मान् सत्यरूप्यप्रत्यभिज्ञापकभौतिकपरीक्षाप्रयोगेन। न तु तदप्यस्ति। अथ मन्यसे—दोषोपहतनयनेनैव ग्राह्य तद्रूप्यमिति। तर्हि दोषान्वयव्यतिरेकानुविधायितया तस्य दोषपरिकल्पितत्वं न वस्तुसत्त्वमिति कुतो न निश्चिनुया ? भ्रमस्य मिथ्यार्थविषयानुपपत्ते सत्यरजतमस्तीत्युपगम्यत इति चेत्। साधु भोः कृतं त्वया यत् प्रामाणिकवचन प्रामाणिकी दोषानुपप्लुतकरणाना लौकिकानां च प्रतीतिमनादृत्य दुष्टकरणानामुपलम्भ एव प्रमाणीक्रियते ॥

८२. **स्वप्नसत्यत्वे नास्ति किमपि मानम् :** ननु सर्वदोषमलवार्जितमस्त्येव ममापि प्रमाणमागमरूपम्। आगमश्च त्रिवृत्करणमाह भूतानाम्। सूत्रकारश्च भूयस्त्वात्तद्व्यपदेशत्वमाह वस्तूनाम्। तत्कथं प्रमाणापरिशुद्धिः प्रक्रियायाः ? यद्येवं विचारसीमतः प्रतिनिवृत्य वाक्यशरणोऽसि, स्थिरीभव तत्रैव। न तु तत्रापि ते साहाय्यमस्ति। यत्कारणं प्रकृतो विषयः प्रत्यक्षादिसीम्न्येव वर्तते न

त्वागमगम्य·। प्रमाणान्तरप्रसिद्धोऽप्यर्थश्चेद्बाध्यते श्रुत्या, किं नाम स्यात् प्रामाण्य बाध्यविषयस्य प्रत्यक्षादे ? न च प्रत्यक्षाद्यवगाहितद्वैतस्य श्रुत्या बाध ब्रुवतामद्वैतवादिनामप्ययं दोष· समान । श्रुत्या हि द्वैतस्य परमार्थसत्त्व बाध्यते, न तु तत्प्रत्यक्षादिविषय· । न च प्रमाणान्तरविरुद्धार्थविषये श्रुते· प्रामाण्यं कल्प्यते तै । तस्माद्भवत एवासाधारणोऽयं दोष· । त्रिवृत्करणश्रुतिस्तु सर्वपदार्थेष्वपि सर्वेषां भूताना सत्त्वमाह। सूत्रकारश्च भूम्यादिव्यपदेशो भूयस्त्वकृत इत्याह । न तु क्वचित्प्रत्यक्षविरुद्ध सत्यमिथ्यावस्तुनोरितरेतरत्वं मिथ्यावस्तुसामान्यनिषेधनं वा शास्त्रे दृष्टचरम् । तस्मादप्रमाणवत्येवेय भवत· कल्पना ॥

यच्चोच्यते स्वप्नप्रपञ्च सत्य एवेश्वरेण सृज्यते तत्कालावसान इति । तत्र पृच्छ्यते कथमिद ज्ञायत इति । आगमादिति चेत् । आगमः किं जागरितोपलब्धः कि वा स्वाप्न इति । यदि स जागरितमात्रगृहीतसत्ताक·, स्वप्नोच्चरितमप्याप्तवाक्यं कि प्रमाण तत्र भवतो जागरितसत्यत्वे मिथ्यात्वे वा ? न चागमार्थोऽपि भवदुक्तरूपः **'स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥'** इत्यादि श्रुतिभ्यः । न हि स्वप्नस्य सत्यत्वे विवक्षिते मोदनजक्षणभयादिष्विवशब्दाभ्यासः समञ्जस इत्यवकल्पते ॥

**८४. स्वप्नः स्वप्नद्रष्ट्रमात्रानुभाव्यो जागरितं तु सर्वसाधारणमिति भेदो मृषा :** यदप्युच्यते स्वप्नस्तत्तत्पुरुषमात्रोपलभ्यो जागरितं तु न तथेति । तदपि मनोरथमात्रम् । ननु यद्यभविष्यत्सर्वसाधारणः स्वप्नः, तदा सर्वोऽप्यग्रहिष्यत् स्वप्नदृशं स्वप्नकाले,

न तु तथा गृह्णाति । तस्मादेकपुरुषानुभाव्य· स्वप्न इति निश्चीयते । तत्किं जागरिते स्वप्नगतै सकलेतरपुरुषैर्गृह्यते जाग्रत्पुरुष· कश्चित्? नो चेत् को विशेष· स्वप्ने यमवलम्ब्येदमुच्यते स्वप्नदृङ्मात्रशक्यानुभव स्वप्नप्रपञ्च·, जागरितप्रपञ्चस्तु सर्वसाधारणं विद्यमान[1] इति?

नन्वस्त्येव स्वप्ने विशेष· । तथा हि – कारणमपेक्ष्यैव कार्योत्पादो दृश्यते जागरिते, न तथा स्वप्ने । क्वचिद्दण्डादौ सति क्वचित्तदभावेऽपि घटाद्युत्पत्तिर्दृश्यते । क्वचिच्च सत्यपि पुष्कलकारणे न भवति कार्योत्पाद इति । भवत्वेवम्, किं तेन स्यात्? सन्त्येव खलु परे स्वप्नदृग्व्यतिरेकेण ये तथाविधानर्थाननुभवन्ति तत्रैव जाग्रति यथा । न हि ते कल्पिता· पुरुषा· इति वक्तु जिह्वाप्रसारोऽस्ति भवत· स्वप्नप्रपञ्चस्य सत्यत्वं भणत· ॥

अपि च यदि स्वप्न· सत्य , किमिति कार्यकारणभावादिर्नावकाशं लभते सत्यत्वेन भवदभिमतजाग्रद्वदेव? तथाविधाश्चर्य सृजतीश्वरः स्वप्नदृश· पुण्यापुण्यानुगुणेन तद्भोगार्थमिति चेत् । ततः पुरुषान्तरसत्त्वं तद्भोग च तत्रैव स्वप्ने दृष्टं कथ वारयिष्यसि? अथानुमन्यसे तत्सत्यत्वमपि, कथमिद घटते स्वप्नस्तत्तत्पुरुषमात्रभोग्य इति? तदित्थं स्वप्नजागरितयोस्तुल्यत्वं हातुमुपादातुं वा न शक्यमिति सर्वलौकिकपरीक्षकानुभवविसवादेन भ्रमप्रमासाङ्कर्य सम्पादयतस्तव दुरन्तमेव स्याद्व्यसनम् । कि च कार्यकारणभावविसंवादादिकं विशेष इत्यपि मृषा, तत्काले हि कार्यकारणनियमाभावो न संशय्यते

१. तस्यैव सज्जागरितमिष्यते ॥ —का०

तस्यैव – स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्, यथा स्वप्न इत्यभिप्राय ॥ (तत्र भाष्यम्)

किं तु तदग्रिमस्थितावेव । इदानीन्तनत्वेनाकलितायां सर्वस्यामप्यवस्थायां जागरितत्वबुद्धिरवश्यं भाविनीति पूर्वमेव प्रतिपादितत्वात् । तस्मान्नैष ऋजु पन्था. स्वप्नोऽपि जागरितवत् सत्य इति ॥

८३. **समर्थक्रियाकारित्वेन स्वप्नस्य जागरितस्य वा सत्यत्वमिति न युक्तम्** : एतेन योऽप्याचक्षीत–स्वप्नोऽपि सत्य एव समर्थक्रियाकारिवस्त्वाश्रयत्वात्, जागरितवत् । न चैवं मन्तव्यम्– स्वप्ने समर्थक्रियाकारित्वमुपलब्ध सज्जागरिते व्यभिचरति, तेन मिथ्यैव तदिति । सन्ति खलु स्वाप्ना पदार्थाः, समर्थक्रियाकारिता येषां जागरितेऽप्यनुवर्तमाना दृश्यते । यथा स्वप्नभुजङ्गनिमित्ता भीति प्रतिबुद्धमपि पुरुष क्वचिन्न जहाति, स्वप्नानुभूत च विषयसुखं प्रबुद्धस्यापि दृश्यते, स्वप्ने एव प्रतिभात कश्चन विचारः प्रबोधेऽप्यबाधित एव क्वचिदवतिष्ठते । स्वप्ने साधुभि. समं व्यवहारः तैश्चानुगृहीतमन्त्रोपदेशश्च कदाचिज्जागरितेऽपि तथैवेत्यवगम्यते, जागरिते तैरेव साधुभिः सव्यवहारेण तथात्वावगमात् । तथा च क्वचिद्बाध्यत इत्येव स्वप्नस्य सर्वथा मिथ्यात्वनिर्धारणं तर्कशून्यमिति । तन्मतमपि प्रत्याख्यात भवति । तथा हि–प्रबुद्धस्य 'पूर्वं स्वप्नमद्राक्षं तद्गतविषयजन्यमेवेद सुखं दु खं ज्ञानम्, सिद्धिर्वा' इति स्मरणं जागरितोत्थमेवेत्ति स्थिते, कथमिव तन्मात्रेण स्वप्नजागरितयोर्वास्तविकः सम्बन्ध सिध्येत् ?

ननु च भोः प्रबोधे जायमानस्यास्य स्मरणस्य निमित्तीभूतः पूर्वानुभवो जाग्रद्गतो न सम्भाव्यते । स्वप्नगतत्वेन त्वनुस्मरणमस्ति । तथा च दृष्टानुसारेण वरं स्वप्नगतमेव निमित्तं कल्पितमिति । न, प्रतीतिमात्रेण तथा कल्पने अतिप्रसङ्गात् ॥

यच्च स्वप्नजागरितगतानामनुभवसिद्ध्यादीनामुभयत्राप्यनुगतत्वमर्थक्रियाकारित्वं चोदाहृतम् । न तेन स्वप्नस्य बाधितत्वम्, जागरितस्य बाधकत्वं वा प्रहीयते । तथा च स्वप्नगतसुखदुःखज्ञानादिसदृशमन्यदेव जाग्रद्गतं न तु तदेवेति स्वीकर्तव्यं भवत्यकामेनापि । यथा जाग्रद्दृष्टसजातीयाः पदार्थाः स्वप्नेऽपि दृश्यन्ते, न च तावता त एवैते भवितुमर्हन्तीति । नो खलु स्वप्नेऽपि तदन्तर्गतस्वप्नजन्यसुखदुःखादिफलमनुभवन्तमिवात्मानमुपलभमानस्तयोः स्वप्नावस्थयोः सम्बन्धं वास्तविकं कल्पयेत्? तस्मान्न स्वप्नफलसमनुवृत्तिमात्रात् सत्यत्वं सेत्स्यति तस्यावस्थानस्य ॥

अपि च येन जागरितेऽपि समर्थक्रियाकारित्वमस्तीति कृत्वा स्वप्नवस्तुनः सत्यत्वमास्थीयते, तेन जागरितवस्तूना येषां स्वप्ने तन्न लभ्यते किं तेषां वैतथ्यमभ्युपेयते? नो चेत् किमायातमर्थक्रियाकारित्वमात्रेण स्वाप्नजगत इति? तत्सिद्धमिदं यत् सर्वत्र भ्रमेऽस्त्येव तात्कालिकी सत्यत्वबुद्धिः, समर्थक्रियावत्त्वं तु स्वभावानुसारेण । क्वचिन्मिथ्यात्वावगमेऽप्यनुवर्तत एव तत्, न तावता मिथ्यात्वहानिरिति ॥

तस्मान्न शक्यते सत्यत्वमास्थातुं स्वप्नप्रपञ्चस्य विविधदोषवातोच्चलितकल्पनातरङ्ग विनेति सिद्धम् । ततश्च लौकिकपरीक्षकबुद्धिसाम्येन स्वप्नमिथ्यात्वे सति तदविशेषाज्जागरितमपि मिथ्यैवेति पूतः पक्षः ॥

८४. **प्रपञ्चमिथ्यात्वोपसंहारः** : यत्पुनराशङ्क्यते मिथ्यात्वप्रसाधने प्रपञ्चस्य विषयविषयिणोः सम्बन्धानुपपत्त्यपेक्षा, सम्बन्धानुपपत्तिसाधने तु मिथ्यात्वसिद्ध्यपेक्षेति परस्पराश्रयतेति । तत्परि-

हृत स्वरूपव्यभिचारित्वात् प्रपञ्चस्य सुषुप्ते तस्य मिथ्यात्वमन्यसिद्धिमनपेक्ष्यैव सिद्धायते, तत एव सम्बन्धविरहोऽपि सुसाध इति । यच्चोद्भावितं क्वचित्प्रपञ्चप्रकाशाभाव. सत्य प्रकाशस्तु मिथ्येति विनिगमने हेत्वभाव इति । तत्र वदाम – न ब्रूमो वयमप्रकाश सत्य इति, कथ तर्हि प्रकाशाप्रकाशाभ्यां स्वरूपव्यभिचारादेव प्रपञ्चो मृषेति । न ह्यात्मापि तथा क्वचिदप्रकाशस्वरूप येन तस्यापि मिथ्यात्वं प्रसज्येत । ननूक्तं संसारदशायामात्माप्रकाशरहित एवाभ्युपेयः, अन्यथा शास्त्रोपदेशवैयर्थ्यादिति । मैवम्, कल्पिताप्रकाशेन नित्यप्रकाशविरोधानुपपत्ते । संसारदशायामपि प्रकाशस्वभाव एव हि सन्नात्मा विकल्प्यते न प्रकाशत इति, शास्त्रजनितप्रबोधेन तु विज्ञायते न क्वचिदप्यस्य स्वरूपभूतस्य प्रकाशस्य विगम सम्भवतीति । तेन न दोष. । तस्माद्व्यभिचरितस्वरूपत्वान्मिथ्यात्व जगतः, आत्मनस्तु वैपरीत्यमिति निष्कण्टक पन्था ॥

## स्वप्नो जागरितान्तर्गतः कश्चिद्विशेष इति मतं तत्परीक्षा च

**८९. सुषुप्त्यादीनां कादाचित्कत्वान्न पृथगवस्थात्वमिति शङ्का :** अथ कश्चिदेवं प्रत्यवतिष्ठेत – न किलास्ति स्वप्नो नाम जागरितव्यतिरेकेणानुभव. । यथा रूप्यादिभ्रान्तिर्जागरित एव दोषबलादनुमीयते, एवमेव मदमूर्छास्वप्नाद्यवस्था जागरित एवानुभूयन्ते । तस्मान्न तेषा पृथक्सत्त्वमवकल्पते । इत्थ च यदुदित स्वप्नसाम्येन जाग्रत्प्रपञ्चस्याप्यतथात्वं तद्दुरुपपाद भवति । न हि क्वाचित्कानुभवाना सुप्तिमूर्छादीनां स्वाश्रयीभूतस्य विच्छेदराहित्येनानुवर्तमानस्य जागरितस्य सत्त्वं विनात्मलाभः सम्भवति ॥

अथ भवेन्मनीषा—न जागरिताश्रया भवितुमर्हति सुषुप्ति, जागरितविरुद्धस्वरूपत्वात्। सुषुप्तिर्हि नाम कार्यकरणव्यापारोपम, जागरितं च तद्विपरीतम्। तत्कथ विरुद्धस्वभावयोराश्रयाश्रयिभावः शक्यकल्पन। एवं च सुषुप्तिशब्दव्यपदेश्यः कश्चित् स्वतन्त्र एवानुभव इति। नैतदेवम्, असार्वदिकत्वात् सुषुप्ते। जागरित हि स्वाभाविकं पुरुषस्य, निद्रा तु तद्वृत्त्यभाव एव न पृथगनुभूति। भवति चात्र दृष्टान्त—शस्त्रचिकित्सक सूक्ष्मचिकित्सा प्रारिप्समाणो य यं रुग्ण सुष्वापयिषति तं त जनं वायुविशेषादिनस्यद्रव्यप्रयोगेण निद्रापयति। तदा प्रसुप्तत्वादेव रुजार्दितं न तु खाकरोति शस्त्रक्रिया। यदा तु भिषक् तं जागरयति तदैव जानात्ययमह चिकित्सित इतीति प्रसिद्धमेतत्। अतोऽवगम्यते जागरितव्यापारोपरमे य कादाचित्को बाह्योपलम्भनाभाव स एव सुषुप्तिरिति निगद्यते लौकिकैर्न पुन सुषुप्तिनाम्नी काचिद्विशिष्टावस्था विद्यत इति। तत्सुष्ठूक्त क्काचित्का सुप्तिस्वप्नमूर्छादयो जागरितस्यैव केचन विशेषा इति॥

एव च स्वप्नस्य जागरिताश्रयत्वे सिद्धे तत्पूर्व पश्चाच्चानुवर्तमानं जागरितं सत्यमेव भवति। न तु स्वप्नसाम्याद्वितथम्, सामान्यविशेषभावावगमात् स्वप्नजागरयो। यथेह कश्चिदनिद्राण एवानेकधा कल्पयति सोमशर्मपितृन्यायेन 'अहममुष्य पुत्रोऽमुकगोत्र इदानीमय नाम सवृत्त इदमिदानीं लब्धमचिरादेव प्राप्स्यते पुनरन्यदपीष्टमिति' तथैव जागरितातिशय एव कश्चित्स्वप्नविकल्पोऽपि भविष्यति। न पुनरनुभवान्तरम्, मानाभावात्। न हि रज्जुसर्पादिविकल्प जागरिताश्रय जागरितव्यतिरेकेणावस्थान्तरसम्बद्ध मन्येत कश्चिदपि। भवति चात्र श्रुतिः स्वप्नस्य जागरिताश्रयत्वं ब्रुवाणा—"**अथो खल्वाहुर्जागरितदेश**

**एवास्यैष इति । यानि ह्येव जाग्रत्पश्यति तानि सुप्तः"** इति । तस्मान्न स्वप्ननिदर्शनेन युक्तमन्यथयितु जागरितसत्यत्वमिति ॥

**८६. जागरितं न स्वप्नाद्याश्रयः, अवस्थात्वाविशेषात् :** तदेतत्प्रत्युच्यते – यदिदमशङ्कितमभिहित जागरितमेवाश्रयोऽनुगत सर्वासां कादाचित्कानामवस्थानामिति, तद्विचारं न क्षमते । तथा हि – जागरितस्वप्नसुषुप्त्यादीनामुद्भवाभिभवानुभवे समाने सति कथमिदमवधार्येत यज्जागरितमेवाश्रय, तदाश्रिताश्च स्वप्नाद्यवस्था न पुनर्वैपरीत्यमिति ? यथा जागरित पुरस्तान्मध्ये सुषुप्तिस्ततःपरं जागरितमिति वक्तु शक्यते, एवमेव खलु प्रथम सुषुप्तिर्मध्ये जागरित तदनन्तरं पुनः सुषुप्तिरित्यपि वक्तु शक्यत एव । अभ्युपगम्येदमुक्तम् न तु काचिदानुपूर्वी विद्यतेऽवस्थाना वस्तुतः । निरणायि च प्रागवस्थाना पौर्वापर्य दुर्भणमिति । तस्माद्दुराग्रहनिबन्धनोऽयं जागरिते पक्षपातः ॥

**८७. जागरितं स्वाभाविकमित्यपि न सम्यक् :** यत्तु जागरितं स्वाभाविकमिति, तदपि दुःसम्पादम् । सुषुप्तेर्नास्ति कस्यचिदपेक्षा जागरिते तु विषयदर्शनापेक्षेत्यत सुषुप्तिरेव स्वाभाविकीति वक्तुर्निषेधकाभावात् । ननु तस्य पक्षे बाधकमिदमेव यत् सर्वस्य सर्वदा सुषुप्तित्वप्रसङ्गः, जागरिते हेत्वभावादिति चेत् । मैवम् । अनेनैव न्यायेन जागरितस्य स्वाभाविकत्वे तदुच्छेदे हेत्वभावप्रसङ्गात् । न च स्वाभाविकरूपे रूपान्तरानवकाश एव, शुक्तित्वस्यैव स्वाभाविकत्वेपि रूप्यत्वभ्रान्तिदर्शनात् । प्रकृतेऽपि सुषुप्तिः स्वाभाविकी जागरित तु भ्रम इत्युत्थाने निवारकाभावात् । अतो दुर्घटमेतज्जागरिताश्रयत्व नाम सुषुप्त्याद्यादीनामिति ॥

८८. **स्वप्नो नाम स्वतन्त्रावस्थाविशेष एव, स्वासाधारणसामग्रीकत्वात् :** यत्तूच्यते -- स्वप्न कश्चिज्जागरिताश्रय कल्पनाविशेष एवेति । नैतदेव भवितुमर्हति[१] सामग्र्यभावात् । न हि जागरिते अनुभूयमाना एव शरीरेन्द्रियादयो वर्तन्ते स्वप्नेऽपीति वक्तुं युज्यते, माभूत्स्वप्नशरीरोपभुक्तगन्धमाल्यादीना नियमेन जागरितशरीरेऽप्यनुवृत्तिरिति । तस्माद्भिन्नसामग्रीकत्वाद्भिन्नस्थानत्वमेव युक्तमुत्पश्यामो स्वप्नजागरितयो । जागरितदेशश्रुतिस्तु तत्समाननिर्भासत्वाभिप्राया । न तु जागरितस्य स्वप्नस्य वा तात्पर्येण सत्यत्व ब्रूते, स्वयंज्योतिष आत्मन. प्रतिपादने प्रवृत्तत्वात् । अतो न विरोधः ॥

**यच्चोद्भावनं** जागरितदेशमनोरथादिवन्मिथ्याकल्पनारूपोऽय कश्चिदनुभवः स्यादिति । विषमोऽयमुपन्यास । जाग्रत्कल्पनायां हि न परं कल्पनाकाले जाग्रद्बुद्धि., क नु तर्हि तद्बाधानन्तरमपि 'अहमेतावन्तं कालं जाग्रदेवासम्, विस्मृतं मया बहिर्विद्यमान जगत्, विकल्पितं चानेकधा विषयसान्निध्याभावेऽपि' इति परामर्श· समुदेति । स्वप्ने पुनस्तत्काले यद्यपि जाग्रद्बुद्धिरुपतिष्ठते । तथापि बाधवेलाया नाहमद्यावधि जजागार कि तु स्वप्नमेवाद्राक्षं यत्र किलारुक्षमिव गजराजमयुत्सीव च शत्रुभि· सहेत्येवंरूपा प्रतिपत्तिरुत्पद्यते । एव वैलक्षण्यात् स्वरूपबाधाभ्यां न शक्यशङ्का स्वप्नमनोराज्ययोरेकरूपता । एतेन जाग्रत्स्पृक्त्वेनानुभूयमाना करणदोषेणातिदूरादिकारणान्मन्दान्धकारादिनिमित्ताद्वा समुपजायमाना भ्रान्तयो मदमूर्छोन्मादसन्निपाताद्यवस्थाश्च स्वप्नविलक्षणत्वेन व्याख्याता वेदितव्या. । समानं हि तत्रापि यथा

१. न जाग्रद्देशग स्वप्नो जाग्रत्सामग्र्यभावत ।
अध्यात्माद्यर्थविरहे यत स्वप्नान् प्रपश्यति ॥ —वा०

कथञ्चिज्जागरितसम्बद्धत्वं जागरितान्तर्गतपुरुषान्तरज्ञानादिकं वा सर्वत्रेति । यद्यपि तत्तद्भ्रान्तिविशेषे मदोन्मादसन्निपाताद्यवस्थायां च जागरितसकलेतरपुरुषैरननुभूयमानानि दर्शनानि प्रादुर्भवन्ति स्वप्नवदेव, तथापि सर्वथा जाग्रत्सम्बन्धकलङ्करहितेन स्वासाधारणाध्यात्मिकाधिभौतिकसामग्रीसचिवेन स्वोचिताहन्ताविशेषसवलितेन चानुभवविशेषेण स्वप्नेन न सर्वथा साम्यं सम्भवति कस्यचिदप्युपरिनिर्दिष्टानुभवस्येति सर्वसम्प्रतिपन्नमेतत् । अपि च -- मदमूर्छादय सर्वैरपि न नियमेनानुभूयन्ते । किं तु देहमनोदोषविशेषवद्भिः कैश्चित्कदाचिदेवानुभूयन्ते । स्वप्नसुषुप्ती पुन. शरीरमनस्वास्थ्यवतां सर्वेषामपि नियमेन भवत इति सुप्रसिद्धमेतत् । तत्सिद्धमिदं स्वप्नस्य जागरितवदेवानुभवान्तरस्थानत्वमिति । अतो निरुपसर्गमेव स्वप्नोपन्यासेन जागरितमिथ्यात्वोपपादनम् ॥

८९. **जाग्रत्प्रत्ययस्य स्वप्नप्रत्ययसमानयोगक्षेमता :** यद्यपि 'अहं जागर्मि भूतकालेऽस्वाप्सं स्वप्नमद्राक्षं चे'त्यनुभवस्मृती जागरित एव भवत' । नो जात्वहमिदानीं स्वपिमीति स्वप्न पश्यामीति वा तत्कालेऽनुभवः । यद्यपि च जागरिते जायमाना सुप्तिस्वप्नविषयिणी स्मृतिर्नानुभवानुरूपा । यथा हि 'मम पूर्व भुञ्ज -- इत्याकारकानुभव आसीदिदानीं तु पूर्वकालीनं भोजन स्मरामी'ति परामर्श., न तथा 'मम स्वापिमीत्यनुभव आसीदि'त्यनुव्यवसायो भवति कस्यचित् । तथाचानुभवाभावादनुरूपस्मृत्यभावाच्च शक्यत एव वदितुमवस्थात्रिकज्ञानस्याप्याश्रयो जागरितमेवेति । तथापि निर्बाधमेव स्वप्नसाम्येन जाग्रन्मिथ्यात्वप्रतिपादनम् । यथा हि सुषुप्तिस्वप्नप्रत्ययौ तथा जागरितप्रत्ययोऽपीऽत्यविशेषात् कथं जागरितस्यैव सत्यत्वमास्थीयताम्'

सुषुप्तिस्वप्नप्रत्ययौ केवलप्रत्ययौ भवत., जाग्रत्प्रत्ययस्त्वपरोक्षविषयः तेन भवति विशेष इति चेन्मन्यते, तत्र वक्तव्य भवति– किमनुभवविशेषत्वाय भवत्यापरोक्ष्यं विषयस्य, आहो तत्सत्यत्वमपि बलादानयती.ति । न तावदापरोक्ष्य सत्यत्वद्योतकमपीति युक्तम् । न हि शुक्तिरजतापरोक्ष्येण तत्सत्यत्वमध्यवसातुं युज्यते । अतोऽनुभवविशेषत्व एव प्रयोजकमापरोक्ष्यमित्युपगन्तव्यम् । तदा प्रत्ययत्वाविशेषात् सुषुप्तिस्वप्नयो , सह जागरितेन युगपदनुभूयमानत्वाच्च, सर्वासां वा सत्यत्वमवस्थाना अथवा सर्वासां सममेव मिथ्यात्वम् । तत्रैव सति कथमिदमाशङ्क्येत जागरितेनैव सत्येन भाव्यमिति ॥

ननु जागरितप्रत्ययविषयस्य न बाध्यमानत्वमस्ति यथा स्वप्नसुषुप्तिविषययो· । न हि यथा जागरितप्रत्ययवेलायां जागरितविषयो वर्तते निश्चिततत्स्वरूपेण प्रत्यभिज्ञायमान·, तथा स्वप्नसुषुप्तिप्रत्ययवेलायां तद्विषयोऽपि वर्ततेऽबाधित· । तत इदमुपपन्नं यज्जागरितस्यैव सत्यत्वमिति । मैवम् । स्वप्नेऽपि जागरितप्रत्ययस्य सत्त्वात्, तद्गतविषयस्य च तदानी निश्चिततत्स्वरूपतयैव प्रत्यभिज्ञानात् । स्वप्नवेलायां तद्विषयो नाबाधितो वर्तते – इत्येतदपि स्वप्नसमनन्तरमेव जायमानं ज्ञानमिति न तत्कालेऽबाध्यत्वेन भासमानत्वं जाग्रद्विषयाणां सत्यत्वमानेतुमलम् । कि च यदि नाम जाग्रन्मात्रे प्रत्यभिज्ञा, कथमेतावता जाग्रत्सत्यत्वमपि सिध्येदिति वक्तव्यम् । प्रत्यभिज्ञाया अपि प्रत्ययत्वाविशेषात्, सर्वप्रत्ययाणामप्यत्र परीक्षितव्यत्वात् न हि सत्यत्वं असत्यत्वं वा शङ्कितु युज्यते प्रत्यभिज्ञामात्रबलात् ॥

ननु तर्हि सर्वासामेव प्रत्ययत्वाविशेषादस्तु सत्यत्वमेव । किमनेन मिथ्यावादेन? न, सत्यमिथ्याविभागानुपपत्तौ जागरितेऽपि

शुक्तिरजतपरमार्थरजतादीनामविशेष प्रसज्येत । ननु सर्वमिथ्यात्व-वादेऽपि समानोऽय दोष ? न, आत्मन सत्यत्वाभ्युपगमात् । मिथ्यात्वाविशेषेऽपि क्वचित् कल्पितसत्यत्वदर्शने बाधकाभावाच्च । अव्यभिचरितत्वस्वरूपत्व तु न कस्यापि प्रत्ययस्य[1] युज्यते, सर्वेषामपि प्रत्ययानामविशेषेणाविर्भावतिरोभावसत्त्वात् । आत्मनस्तु नैवमपि स्वरूपव्यभिचारित्वम् । न हि क्वचित्सम्भावयाम: प्रत्यय यस्मिन् स्वरूपं न स्यादस्येति ॥

९० **आत्मनः स्वतःसिद्धता** : ननु किमिदं क्रियते भवता ? विषयानुभवबलादात्मानं प्रसाध्य कथ विषयस्यैवापह्नव ? साधनस्यैवाभावतोक्तिः, तस्य चाभाविकस्य समाश्रयणेन भाविकस्य साधनमिति नवीनोऽयं पन्था न्यायविद्भिरदृष्टचरः । मैव मस्था: । नाह विषयसत्त्वादात्मन सत्यतां प्रसाध्य तदनन्तरं तस्यैव विषयस्य मिथ्यात्वं प्रत्यज्ञासिषम्, येनेत्थ पर्यनुयुज्येयम् । कथं तर्हि, लोकव्यवहारसिद्धमिथ्याविषयानुभवादप्यात्मास्तित्वमभ्युपगमयितु[2] शक्यत

१ अवगतेरात्मज्योतिषो नैरन्तर्यभावात् कूटस्थनित्यता अद्वैतभावश्च सर्वप्रत्ययभेदेष्वप्यव्यभिचारात् । प्रत्ययभेदाश्चावगति व्यभिचरन्ति । यथा स्वप्ने नीलपीताद्याकारभेदरूपा प्रत्ययास्तदवगति व्यभिचरन्त परमार्थतो न सन्तीत्युच्यन्ते । एवं जाग्रत्यपि नीलपीतादिप्रत्ययभेदास्तामेवावगति व्यभिचरन्तोऽसत्यरूपा भवितुमर्हन्ति ॥ —उ० ग०

२ अज्ञानानुपमर्देन व्याकृतिर्यास्य जायते ।
स्वप्नविज्ञानवन्नासौ सत्यमेयव्यपाश्रया ॥
सम्यग्ज्ञानसमुत्पत्तौ हेतुत्वं तु निगच्छति ।
निद्रां हत्वा यत स्वप्नज्ञानादपि विबुध्यते ॥ —वा०

(अस्य—जगत , व्याकृति —नामरूपवद्विषयाकारेणाभिव्यक्ति । यथा स्वप्नज्ञानान्निद्रापाय: प्रबोधश्च, एवं विषयानुभवादपि सुविचारितान्मोहापायः सम्यग्ज्ञानं चोत्पद्येयातामित्यर्थ: )

एवेत्यब्रुवम् । तत्रादौ त्वया प्रतिज्ञातं स्वप्नादिर्जागरित एवानुभूयत इति । तथा च जागरितमेकमेवानुभवस्थानमित्यूरीकृतम् । तत्र सुप्ति-स्वप्नादिक भूतपूर्वं न भवितुमर्हति मानाभावादिति चेन्मन्यसे, तदा-नद्यतनविषयासम्बन्धो नित्यवर्तमानस्वरूपस्यात्मनो बलादायात इति प्रबोध्यसे । यथा हि सुप्तिस्वप्नप्रत्ययौ प्रत्ययमात्रौ जागरितदेशस्थौ न तु तयोः पूर्वं याथातथ्येनानुभवरूपेणास्तित्वे मानमस्तीत्यनुमन्यसे, एवमन्योऽप्यनद्यतनविषयकप्रत्यय प्रत्यय एव केवलम्, न तु तद्ब-लादनद्यतनविषयसम्बन्ध शक्यशङ्क आत्मन । न च वार्तमानिकत्व-मप्यात्मनो भाविकं मयाङ्गीक्रियते, भूतभविष्यन्निरपेक्षस्य वर्तमानस्य दुरुपपादत्वात् । भूतभविष्यतो प्रतिद्वन्द्वो हि वर्तमानो नामेष्यते, कुतस्तदभावे तद्भाव इति ॥

एव तर्ह्यद्वितीयात्मसिद्धि. कथमिति चेत् । आत्मत्वादिति गृहाण । न[१] ह्यात्मा प्रमाणमपेक्ष्य सिध्यति । आत्मनश्च प्रमेय सिद्धये प्रमाणानि स्वीक्रियन्त इति व्यवहारः । अप्रामाणिकत्वाच्छून्य-कल्पस्तर्हीति चेत् । न, निराकरणासम्भवात् । य एव हि निराचष्टे तस्यैव स्वरूपमात्मेति न शून्यकल्पता । तस्मात्परानपेक्षयैवात्मन सिद्धि ॥

**९१. विषयासत्त्वनिश्चयेन न व्यवहारलोपः :** नन्वेवं दृष्टा-पलापे सर्वव्यवहारलोपप्रसङ्ग । विषयस्य हि सर्वात्मनापि सत्त्वं प्रत्या-ख्यातं भवता, ततश्च दृष्टविरोधः । निर्विशेषश्चात्मावगमित । तत्र का गतिर्व्यवहारस्य सर्वलोकसिद्धस्य? अत्र पृच्छाम — केयं बिभी-

१ आत्मन स्वत सिद्धत्वात् । सिद्धे ह्यात्मनि प्रमातरि प्रमाणान्वेषणा भवति ॥ —गी० भा०

षिकेति? निर्विशेषमात्मानं ज्ञातवतो व्यवहार· परमार्थतो नास्ती-त्यापाद्यते, आहोस्विज्ज्ञानी न व्यवहर्तुं शक्नोतीति । आद्ये न विवाद· । योऽय विचारात्प्रागुपलभ्यते व्यवहार· सः पारमार्थिकसत्य-स्वरूपो भवत्युत नेति निश्चेतुं प्रवर्तते जिज्ञासुः । निश्चिनोति च विचारान्ते सर्वमिद मिथ्यैवेति¹ । तत एव च कृतकृत्यो भवतीति न किञ्चिदपहीनम् । उत्तरस्मिंस्तु कल्पे किं व्यवहार एष्टव्य स च ज्ञानिनो न सिध्यतीत्यनिष्टमापाद्यते, आहोस्विज्ज्ञानी व्यवहरन् दृश्यते तत्कथमुपपद्यता यदि ज्ञानेन विषयाभाव सिद्ध इति शङ्का-कलङ्क ? तत्र प्रथमे यथा सर्वे व्यवहरन्ति तथा ज्ञान्यपि व्यवहरतु यदीच्छति व्यवहर्तुम्,² क· प्रतिबन्ध ? व्यवहाराय सामग्र्यभाव एवेति चेत् किमेकस्मिन् पुरुषे ज्ञानिनि प्रपञ्चप्रलयमेव शङ्कसे ? ननु प्रतीतौ तत्र व्यवहारे च सति कथं ज्ञानीति ? साधु पृष्ट त्वया । न वयं जाग्रत्प्रतीत्यप्रतीतिभ्या³ ज्ञानित्वान्यत्वे सम्प्रधारयाम·, अपि तु मिथ्यात्वनिश्चयतदभावाभ्याम्⁴ । तथा च स्मृति·— **वसन् विषय-**

१. अहमसावमुष्य पुत्रो ममेद धनं सुखी दु खीत्येवमादिलक्षणाविद्या-कृतत्वात्तस्या अविद्यायाश्च निरन्वयतो नाशितत्वात् कुतो विशेषसंज्ञासम्भवो ब्रह्मविदश्चैतन्यस्वभावस्थितस्य ॥ —बृ० भा०

२ व्यवहारे यथैवज्ञस्तथैवायमपण्डित ।
वासनामात्रभेदोऽत्र कारण बन्धमोक्षदम् ॥
यावच्छरीरं तावद्धि दु खे दु खं सुखे सुखम् ।
असंसक्तधियो धीरा दर्शयन्त्यप्रबुद्धवत् ॥ —यो० वा०

३ सर्वसंसारभावोऽस्य न यथा लक्षणं तथा ।
सर्वाभावोऽपि नैव स्याल्लक्षणं ब्रह्मवेदिन ॥ —वा०

४ जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ।
न तत्पश्यति तद्रूप ब्रह्मवस्त्वेव पश्यति ॥ —सू० ब्र०

**मध्येऽपि न वसत्येव बुद्धिमान् । संवसत्येव दुर्बुद्धिरसत्सु विषये ष्वपि ॥** (मो० २९८--६) इति । अतो न कोऽपि दोष ॥

एतेन द्वितीयोऽपि कल्पः प्रत्युक्तकल्पः । यदि ज्ञानी व्यवहरन् दृश्यते दृश्यता नाम । व्यवहारस्य सर्वस्यापि मिथ्यात्वमेव[1] निश्चिनोतु भवान् । येनैव कृतकृत्यता सेत्स्यति । तस्मान्माभैषीः का गतिर्भवित्री लोकव्यवहारस्य ज्ञानोदय इति । प्रपञ्चयिष्यते चेद् पुनरपि जीवन्मुक्तिविचारप्रस्तावे । तदलं प्रसङ्गागतप्रपञ्चेन ॥

इदं त्विह प्रकृतं—यस्यापि मते जागरितमेकमेवानुभवस्थान नान्यत्ततः प्रविभक्तमवस्थान्तरमस्ति, तस्यापि प्रपञ्चस्य मिथ्यात्वमात्मनश्च निर्विशेषसत्यत्वं नाशक्यविज्ञानमिति ॥

## जागरितस्वप्नयोर्मिथ्यात्वे शङ्का परिहारश्च

९२. **प्रतीतिवैलक्षण्यादिभिर्जागरितसत्यत्वमेष्टव्यमिति शङ्का :** अभ्युपगम्यैवावस्थात्रयं पुनरेषा प्रक्रिया प्रकारान्तरेणाक्षिप्यते । भवतु स्वप्नप्रबोधयोस्तुल्यता । न च तावता तयोर्मिथ्यात्वमपि, प्रतीतिविरोधात् । न हि प्रतीतिवैलक्षण्येऽपि स्वप्नवज्जाग्रन्मिथ्येत्यनुमातुं युक्तम् । अन्यत्र स्थितानां वस्तूनामपरत्रार्थक्रियाकारित्वाभावाच्च । न हि स्वप्ने कृतं भोजनादिकं जागरिते क्षुधाद्युत्सारणायोत्सहते । नापि प्रबुद्धेन पुरुषेणानुभूयमानमष्टैश्वर्यमपि तस्यैव स्वप्ने दोदुन्वद्दारिद्र्यदलनाय कल्पते । जागरिते योऽह्यशनायत्युदन्यति वा, तेन तस्यामेवावस्थाया भोक्तव्यं पातव्यं च तृप्त्यर्थम् । यश्च स्वप्ने

१ प्रतिलोममिदं सर्व यथोक्त लोकबुद्धित ।
अविवेकधिय।मस्ति नास्ति सर्व विवेकिनाम् ॥ —उ०

दरिद्राति, तेन तस्यामेव स्थितौ दारिद्र्यनिर्घातायार्जितव्यं धनम् । तस्मात्तत्तदवस्थामात्रलब्धार्थक्रियस्य प्रपञ्चस्य तदन्यतो व्यावृत्तमेव किञ्चित् सत्त्वमकामेनाप्यभ्युपेयं भवति । यथेह लोके घटात् पटस्य भिन्नमेव सत्त्वं भिन्नप्रयोजनसाधनत्वात्, एवं जाग्रत्स्वप्नयोर्यावदवस्थिति सत्यत्वमेवास्थेयं भवति न पुना रजातादिवदारोपितत्वम् ॥

अपि च रजतादिकं यद्यपि न पुरोवर्तिशुक्त्याद्यात्मना सद्भवति । तथापि रजताद्यात्मस्वरूपेण तु क्वचित्सदेव दृष्टम् । अत्र तु जागरितं स्वप्नश्चेत्युभावपि चेत्समारोपितौ, कुत्र स्यात्तयोः सत्त्वं यदपेक्षयात्र मृषारूपौ स्याताम्? अथ स्वप्नप्रबोधौ परस्परसमारोपितौ, तर्हि द्वयोरपि प्रातिस्विकस्वरूपेण सत्यत्वमेवाङ्गीकार्यं भवति । अथवा स्वप्नस्य समनन्तरप्रत्ययबाध्यत्वादस्तु समारोपितत्वम्, न त्वेव जागरितस्य मिथ्यात्वं युक्तम्, प्रतीतिवैलक्षण्यविरोधप्रसङ्गादिति ॥

**९३. न प्रतीतिमात्रेण सत्यत्वं जागरितस्य:** अत्र विवेक्तव्यम्—किं प्रतीतिमात्रेण जागरितादिप्रपञ्चस्य मिथ्यात्वं प्रतिक्षेप्तुमीहते प्रतिवादी, अथवा स्वप्रतीतिस्थले समर्थक्रियाकारित्वात्, उताहो समारोपितस्य सर्वस्याप्यन्यत्रसत्त्वनियमादिति । सर्वथापि स्ववधाय कृत्योत्थापनमिदम् । तथा हि—यदि तावत्प्रतीतेर्न मिथ्यात्वम्, कथं रजतादेरपि तत्सिध्यति? तत्रापि मिथ्यात्वमननुजानन् जनस्तु पूर्वाचार्यैरेव सुशिक्षित इति नात्र तन्मतखण्डनयुक्तयः प्रतायन्ते । आदर्शि चाधस्ताद्दिङ्मात्रेण रजतादेः शुक्त्यादावस्तित्वशङ्कापनोदनप्रकारः । तस्मान्न प्रतीतिमात्रात्सत्यत्वम् ॥

ननु प्रतीतिवैलक्षण्यादस्तु जागरितस्य सत्यत्वमित्युक्तम् । न । प्रतीतिवैलक्षण्यस्यापि सत्यत्वव्याप्यत्वाभावात् । न हि यत्र यत्र

प्रतीतिविशेषस्तत्र तत्र सत्यत्वमिति नियन्तुं शक्यते । ननु च स्वप्नो मिथ्येति प्रतीयते जाग्रद्बाधित· । न तु तथा जागरितमपि मिथ्येति कस्याञ्चिदप्यवस्थाया प्रतीयते । इदमपि प्रतीतिवैलक्षण्यमकिञ्चित्करमेव स्वप्नान्तर्गतस्वप्नप्रतीतिवैलक्षण्यवत् । न हि तत्र बाधकः स्वप्नो जागरितमेवायमबाध्यश्चेति तत्काले प्रतीयमानोऽपि तावता सत्य एव भवितुमर्हति । तस्मान्न प्रतीतेर्जागरितस्य सत्यत्वम् ॥

९४. **समर्थक्रियाकारित्वादपि न सत्यत्वम् :** न च समर्थक्रियाकारित्वात्सत्यं भवेत् । यतस्तिक्तता गुडे रुग्णेन दृष्टा, न तु तावता तिक्तताया भाविकत्वम् । ननु तत्र विद्यते सत्यभूतो रोगात्मको दोषः, इह तु नेति वैषम्यम् । न हि परमार्थदोषमनभ्युपगम्य कश्चिदपि भ्रमः शक्योपपादन· । तदभ्युपगमे तु जितं द्वैतिनेति । न । दोषमात्रं प्रयोजकमित्यप्युपपत्तेः । सत्यत्वविशेषणादाने गौरवात् । प्रकृतेऽपि विद्यत एवाविद्यात्मको[1] दोष· ॥

९५. **समारोपितस्यान्यत्र सत्त्वमित्यपि न :** ननु प्रपञ्चस्य कुत्राप्यसत्त्वे कथं समारोपितत्वम्? समारोपितत्वादेव हि यत्र क्वचन भाव्यं तेनेति चेत् । मैवम् । यदि प्रपञ्चस्य समारोपितत्वमनुमन्यते तदा तस्य प्रतीतिमात्रेण सन्तोष्टव्यम् । यत्कारणं तस्य समारोपितस्थलादन्यत्र सत्त्वं सम्भावयितुमपि न शक्यम् । क्वचित्स्थले समारोपितस्य वस्तुनोऽधिष्ठानादन्यत्र सत्त्वमभिमिमानोऽपि न तद्बलादसम्भावितसत्त्वमप्यनुमातुमर्हति । न च दृष्टेऽनुपपन्न भवेत्किञ्चित् । दृष्टा

१ मन सृजति वै देहान् गुणान् कर्माणि चात्मन ।
तन्मन सृजते माया ततो जीवस्य संसृति ॥　　—भा०

ह्यत्र प्रतीतिः क्वाचित्का प्रपञ्चस्य, दृष्टा च सुषुप्तौ तस्य नितरामप्रतीतिः । न चेतरत्र तदानीं तत्सत्त्वं दृष्टम्, सम्भाव्यते वा । तस्मात् समारोपितं मिथ्या च जगदित्येतदेव दृढीकृतं भवति । न तु समारोपितत्वात् क्वचित्सत्त्वम्, आत्मजगतोर्भिन्नस्य जगदधिकरणस्य सम्भावयितुमशक्यत्वादित्यलम् ॥

यत्पुनरुच्यते तत्तदवस्थायां विद्यमानस्य यावत्तावदपि यत्किञ्चित्सत्त्वमभ्युपेयं भवतीति । तत्रोमिति ब्रूमः । अभ्युपगम्यते हि तद्यावत्प्रतिभासं प्रपञ्चसत्त्वम् । तदेव च सत्त्वमधिकृत्य विचार्यते किमेतत् परमार्थसत्यमपि भवतीति । निश्चीयते च प्रतिभासमात्रशरीरं तन्न परमार्थमिति । ततो न दोषः । तस्माद्विस्रब्धं निश्चीयतां यत् प्रपञ्चस्य स्वप्नोपलब्धस्येव जागरितेऽपि परिच्छिन्नप्रतीतेः सुषुप्तावभावाच्च तुल्यमुभयत्र मिथ्यात्वमिति ॥

## प्रपञ्चस्य समारोपितत्वे शङ्का तत्परिहृतिश्च

**९६. लोकसिद्धबाधवैलक्षण्यात्प्रपञ्चबाधासिद्धिरिति शङ्का :**

स्यादेतत्-सुषुप्तावभावेन प्रपञ्चबाधो न प्रपञ्चस्य मिथ्यात्वं साध्नोतीव । कुतः लोकदृष्टबाधधर्मवैधुर्यात् । लोके तद्धि बाधितमित्युच्यते यस्य प्रतिपन्नोपाधौ त्रैकालिकमसत्त्वमवधार्यते । नास्त्यत्र रूप्यमासीद्भविष्यति वा यस्माच्छुक्तिकैवेयमिति धीः खलु रूप्यस्य बाधो नाम । तथाविधनिश्चयश्च यत्र शुक्तौ समारोपितं रजतं तस्य स्वरूपस्य निश्चयात् तत्रैव कल्पितरूपाभावदर्शनेन सिध्यति। दार्ष्टान्तिके च न सम्भावयामस्तादृशं बाधम् । यत्र खलु स्वप्ने स्वाप्नः प्रपञ्चः, जागरिते वा जागरितप्रपञ्चः, तत्रैव स्वप्ने जागरिते वा न कश्चिदुपलभते,

निश्चिनोति वा तदभावम् । तथा च यदि नाम सुषुप्तौ नोपलभ्यते प्रपञ्चः, किमायातं ततः प्रपञ्चमिथ्यात्वसाधने ? तस्मादननुरूपत्वाद्दृष्टान्तस्य न जगति सम्भवत्यारोपितत्वानुमानमिति ॥

९७. **परिहारः** : अत्राभिधीयते – नैतद्वैषम्यमस्ति । यत्रैव ह्यात्मनि प्रपञ्च उपलभ्यते तत्रैव तस्याभाऽवोपीति किमत्र चित्रम् ? नो खलु वय जातुचिदब्रूम जगत्स्वप्ने जागरिते वा समारोपितमिति । प्रत्युत जागरित स्वप्नश्च स्वाविनाभूतप्रपञ्चसहितमात्मनि विद्यमाने इव कल्प्येते मुग्धैरित्युद्घोषितमस्माभि । सप्रपञ्चत्व चोक्तनीत्या बाध्यत इत्यत इदमेवायातं यन्मिथ्यात्मत्वमात्मप्रपञ्चसम्बन्धस्येति ॥

ननु नात्मा जात्वनुभवति 'सुषुप्तौ नास्ति मयि किञ्चिदणुमात्रमपि प्रपञ्चसंप्रयोगः, समारोपित एवाभूत्स्वप्नजागरितयोः' इति । ततश्च नात्र रजतमितिवन्नात्र प्रपञ्च इति बाधसमये निश्चयाभावात् तदवस्थमेव वैयर्थ्यमिति चेत् । निपुणोऽसि चोदने । तथाप्यवधारितमना शृणु । नोक्तमस्माभिर्निश्चयसंशयादि प्रपञ्चानन्त पातीति । सुषुप्तौ प्रपञ्चो न विद्यत इति प्रतिजानद्भिरिदमप्युक्तमेव खलु यत्संशयनिश्चयादिक सविषय न लब्धावकाश तत्रावस्थायामिति । तथा च नास्ति चेत्प्रपञ्चबाधनिश्चयः सुषुप्तौ, मास्म नाम भूत् । इदमेव हि भूषण सुषुप्तेर्निष्प्रपञ्चत्वस्य यदस्यामवस्थायां निषेधप्रतियोगित्वेनापि न सम्भाव्यते प्रपञ्च इति । इत्थं च भवता दृढीकृतोऽस्मत्पक्ष एव वाचोयुक्त्यन्तरेण प्रपञ्चबाधनिश्चायाभावं सुषुप्तौ शङ्कमानेन । यत्र तु जागरिते विचारो भवति सप्रपञ्चत्वमात्मनो यद्दृश्यते श्रूयतेऽपि वा, किं तदापातत एव, उताहो तत्सत्त्वमप्यस्तीति, तत्र भवत्येव निश्चयस्तन्मिथ्यात्वे वर्णितन्यायेन ॥

न चेदमाशङ्कनीयम्—सुषुप्तात्मनि प्रपञ्चाभावः, जाग्रत्स्वप्नात्मनोश्च तत्प्रतीतिरिति पुनरपि स एव दोष आवर्तते, आत्मनि प्रतिपन्नोपाधौ निषेधविरहादिति । आत्मनोऽवस्थाविशिष्टत्वे विशिष्टरूपेण च भेदवत्त्वे च मानाभावात्। न च प्रतीतिरेव मानं शुक्त्यादिष्वपि रजतादिविशिष्टत्वप्रसङ्गात् । तस्मादेक एवात्मा सर्वास्वप्यवस्थासु, तथानुभवात् । अतो यत्र प्रतिपन्नः प्रपञ्चस्तत्रैव बाध्यत इति निरुपसर्ग एव प्रपञ्चमिथ्यात्ववादः ॥

## सुषुप्तावनुभूतिरात्मनो धर्म इति मतं तन्निराकरणं च

**९८. आत्मा ज्ञानगुणकोऽहमर्थस्वरूपश्चेति पक्षानुवादः :** अन्यथा पुनरेषा प्रक्रिया कैश्चिदाक्षिप्यते—सुषुप्तौ यद्यपि निर्विषयानुभूतिर्विद्यते । सा न स्वतन्त्रा, कथं नाम, आत्मनो धर्मभूता । एवं च सुषुप्तानुभवबलेनात्मनश्चैतन्यस्वरूपता न सिध्यति, का तर्हि, चैतन्यगुणतैव । एवमेव मदमूर्छादिषु यत्र यत्र निर्विषयानुभूतिस्तत्र तत्र सविशेष एवात्मानुभवो भवति । अत एव न कदाचिदप्यहमर्थताविगमो दृश्यत आत्मनि। सुषुप्त्यादिष्वपि 'मामप्यह न ज्ञातवान्' इत्यहमर्थत्वेनैव परामृश्यत आत्मा । तत्स्वरूपमेवाहमर्थ आत्मनः। ज्ञान तु तस्य धर्मः । यदा यदा ह्यात्मात्मने स्वयमवभासते तदाहमित्येव भासते । तस्मान्नात्मा निर्विषयनिर्विशेषचैतन्यस्वरूप इति युक्तम् । अपि तु दीप इव प्रभाश्रयो नित्याविलुप्तज्ञानगुणाश्रय इत्यास्थेयमिति ॥

**९९. जागरितस्वप्नयोरेवाहंप्रत्ययविषयत्वमात्मनः :** अत्र वदामः—किमत्र सिसाधयिषितम्? आत्माहमित्येव ज्ञायत इति,

उत ज्ञातैव न ज्ञानस्वरूप इति. आहोस्विद्यत्किञ्चिदन्यदेवेति? तत्राहप्रत्ययवेद्यताव्यवहारस्तावदभ्युपगम्यत एव जाग्रत्स्वप्नयोर्यत्रैवाहप्रत्ययस्य[1] सम्भव । ननु सुषुप्तावप्यहमर्थत्वेनैव भात्यात्मेत्युक्तम् । नैतद्युक्तम्, निद्राणस्य कस्यचिदपि 'इदानीमहमर्थस्वरूपोऽहम्' इति प्रतिसन्धानाभावात् । अथ सुप्तोत्थितपरामर्शादेवावसीयताम् । यदा नुसन्धीयते तदाभ्युपगम्यत एत खल्वस्माभिरहमर्थ । ननु च कदापि नात्मात्मनेऽहमन्यत्वेनावभासते । बाढम् । ततो नानुमातव्यमहमर्थएवात्मेति, कथं तर्हि, यदा व्यवहारगोचर आत्मा, तदाहमित्येव[2] व्यवहार्य इति ॥

एतेन – न चेदात्माहमर्थ , कथ प्रत्यगर्थो भवेत्? अहमर्थविनाश एव चेन्मोक्ष· कथ प्रवर्तेरन् जना मोक्षकथाया स्वविनाशसमर्पिकायाम्? – इत्यादयोऽपि शङ्का उट्टङ्किता भवन्ति । न ह्यस्ति स्वत सिद्धिः सर्वप्रत्यक्त्व वाहम । अहंप्रत्ययस्यापि हि सिद्धिर्यस्यानुभवस्वरूपात्मनो बलात्तस्याहप्रत्ययत[3] सिद्धिरिति कथं भवेत्? अहमस्तु सिद्धेरर्वाचीनैव तद्व्यतिरिक्तसकलविषयसिद्धिरिति बाह्यविषयापेक्षया प्रत्यक्त्वसूक्ष्मत्वमात्मदृष्टिभाक्त्वं च तस्य । अतः प्रत्यक्त्वादिभ्यो हेतुभ्यो व्यवहारदृष्ट्यैवाहप्रत्ययगम्यत्वमात्मन· ॥

**१००. अहंप्रत्ययगम्यत्वं न कदापि पारमार्थिकम् :** अथ कस्मात्परमार्थदृष्ट्याप्येव नेति? अविषयत्वादिति ब्रूम । आत्मा हि

१ आत्मनश्चेदहं धर्मो यायान्मुक्तिसुषुप्तयो ॥ —नै०

२. नायमेकान्तेनाविषय अस्मत्प्रत्ययविषयत्वात् ॥ —सू० भा०

३. यस्यानुभवसिद्ध्यैव सिद्धि स्याद्घटसिद्धिवत् ।
ततोऽहप्रत्ययात्सिद्धिमीक्षतेऽनुभव कथम् ॥ —वा०

नाम जिज्ञासोः स्वरूपम् । कथंकारं स्यादयं स्वस्यैव स्वयं विषय ? न ह्यनंशस्य[1] युगपज्ज्ञेयता ज्ञातृता च सम्भवेताम् । विषयत्वे चात्मन किंकृतः स्याज्ज्ञानोपदेशः क्रियमाण· । शब्दादिराहित्याच्च न सम्भाविता विज्ञानकर्मतात्मन· । ननु **'सम आत्मेति विद्यात्'** इत्यादीन्यात्मनो ज्ञेयत्वबोधकवचनानि भज्येरन्नितरथेति श्रुतार्थापत्त्या कल्पनीयं ज्ञानकर्मत्वमिति चेत् । न कल्पनीयम्, श्रुत्यन्तरवदत्राप्युपपत्तेः । यथा **'आत्मा वा अरे द्रष्टव्यः'** इत्यादि वचने सत्यपि रूपाद्यभावान्न[2] दृष्ट्यादिव्याप्यता कल्प्यते, किन्त्वनात्मदर्शनप्रवणतापरित्यागार्थकत्वेन चारितार्थ्यमवसीयते वचनस्य । एवं विजिज्ञासितव्यताबोधकवचनान्यप्यधस्तादुक्तात्माश्रयादिदोषपरिहारायान्यस्मिन् ज्ञेयताबुद्धिवारकाण्येवेति मन्यामहे, **'न चक्षुषा पश्यति कश्चनैनम्'** **'अन्यदेव तद्विदितात्'** इत्यादि न्यायोपबृंहितश्रुतिभ्य· । तस्मादात्मनो विषयत्वासम्भवादहमादिसकलविषयविषयित्वाच्च स्वत एव प्रत्यक्त्वम् । अहमर्थविनाशेऽपि न स्वविनाशो मोक्षमाणस्य, स्वस्याहलक्षिततत्साक्षिस्वरूपत्वात् । अतो मोक्षकथायामपि प्रवृत्त्युपपत्ति । व्यवहारदृष्ट्या तूच्यते सर्वदाप्यहमित्येवात्मा व्यवह्रियत इति । ततो न कोऽपि विरोध· ॥

**१०१. सुषुप्तौ तु नास्त्येवाहमर्थानुभवः :** सुषुप्तौ तु न सम्भवत्यहंव्यवहार· । कुतः ? अहंकारस्य त्वंकारयोर्म्यसहोपलम्भ-

१ न हि निरवयवस्य युगपज्ज्ञेयज्ञातृत्वोपपत्ति. । आत्मनश्च घटादिवज्ज्ञानोपदेशानर्थक्यम् ॥ —तै० भा०

२ रूपवत्त्वाद्यसत्त्वान्न दृष्ट्यादे कर्मता यथा ।
एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ —उ०

नियमात् । प्रतिद्वन्द्विनौ ह्यहकारत्वकारयोग्यौ पदार्थौ । प्रतिद्वन्द्विनो श्चैकज्ञानस्यापरज्ञानसापेक्षतानियम इति प्रसिद्धमेतत् । त्वंकारयोग्यस्य चानुपलम्भात् सुषुप्ते युक्तमेतद्यदहंज्ञानाभाव एव तत्रेति । किं चाहमिद करवाणीति यथा कर्मणि प्रवर्तते कर्मफलाकाङ्क्षी तथा यो यो निद्रास्यति सोऽहमिदानी स्वपानीति सङ्कल्पपूर्वकं स्वप्तु न प्रभवति । न चोपयन्तीं सुषुप्तिं वारयितुमीष्टे कश्चित् । दृष्ट हि ज्वराद्युपद्रुता केचित्सुषुप्तिलाभे सोत्कण्ठा अपि तदप्राप्त्या दु खयन्तीति । निद्राभिभूत एव भवति जागरूकोऽपि यामिक कदाचिदिति च । तदेतत्कस्य हेतो ? अहंज्ञानविरुद्धस्वभावत्वादेव सुषुप्ते । तस्मान्नाहज्ञान सम्भवति स्वापे । किञ्च सकलव्यवहाराभाव एव सुषुप्ते स्वरूपमित्यागोपालपण्डित प्रसिद्धमेतदिति न केनचिद्युक्त्या शक्यते तत्रात्मनोऽहमर्थस्वरूपतां दर्शयितुम् । न ह्यहमित्यात्मात्मानं प्रतिसन्दधाति तदवस्थायामिति ॥

१०२. **ज्ञातृत्वमपि न स्वरूपमात्मनः :** एतेन ज्ञातृत्वमपि प्रत्युक्तं वेदितव्यम्, जानामीति न जानामीति वा प्रतिसन्धानाभावात्सुषुप्ते । अपि च सुषुप्तिर्नाम निर्विषयावस्था । तदापि चेदात्मा ज्ञाता, ज्ञातृत्वं कीदृश भवेत्? ज्ञातृत्वं विषयशून्यमिति च स्फुटो व्याघात ॥

ननु ज्ञातृत्वं विषयं नापेक्षते, ज्ञानगुणाश्रयत्वस्यैव ज्ञातृत्वशब्दभाष्यत्वात् । तर्हि वक्तुमर्हसि ज्ञानातिरिक्तस्य तस्यात्मन किं स्वरूपमिति । न जडं न वा चिदात्मकम्, अनभ्युपगमात् । न च चिज्जडभिन्नं कस्यचिद्बुद्धौ समारोहति । अतो शून्यवादिता परिशिष्यते ज्ञानभिन्नत्वमात्मस्वरूपस्य वदत । न चैतदपि युक्त्युपेतं स्यात्, शून्यस्य निर्धर्मकत्वात् ॥

**१०३. ज्ञानगुणकत्वे धर्मधर्मिणोर्दुर्विवेचनत्वम् :** ननु न वयं शून्यवादिनः । ज्ञानगुणस्य नित्यत्वं स्वाभाविकत्वं च वयमङ्गीकुर्महे । तस्मान्न जातुचिदस्ति चिद्रूपताया निवृत्तिरात्मन इति कथमस्थाने शून्यवादप्रसञ्जनमिति ? मैवम् । यदि चिद्रूपता न व्यभिचरत्यात्मा तदा चित्स्वरूप एव स्यान्न चिद्गुणः । यथेह वह्निरुष्णस्वभावमव्यभिचरन्नुष्ण एव भवति, न तु तद्व्यतिरिक्तस्वरूपस्तद्वत् ॥

ननु च यथा तेजोद्रव्यमेकमेव प्रभाप्रभावद्रूपेणावतिष्ठते । प्रभा च शौक्ल्यादिवद्गुणोऽपि सन्नित्यतदाश्रयत्वतच्छेषत्वहेतोः प्रभावतो गुण इति व्यवह्रियते । न तु दीप एव प्रभा । अन्यथा मणिप्रभयोरैक्ये मणेरवयवा एव विशीर्णाः प्रचरन्तो तस्य प्रभा उच्यन्त इत्यापत्त्या मणेर्विनाश एव प्रभाप्रसरात्प्रसज्येतेति । यथैष दृष्टान्तस्तथा चिद्रूप एवात्मा चैतन्यगुण इति श्लिष्यते । मैवं मंस्थाः । न हि कदाचिदुदाहरणमात्रेण किञ्चित्सिध्यति, प्रत्युदाहरणस्य निवारकाभावात् । प्रकृते दृष्टान्तोपन्यासोऽपि भवतोऽनिष्टफलकः । कथम् ? निबिडावयवप्रविरलावयवरूपविशेषमात्रेणैकमेव हि तेजोद्रव्यं प्रदीप इति प्रभेति च व्यपदेशभेदं भजते । यत्तु मणिदृष्टान्तेन मणिनाशं प्रसज्य प्रभाप्रभावतोर्भेदानुमानम् । तन्मन्दम् । मणेर्द्युमणिप्रभृतिप्रभाप्रतिस्फालकत्वात्प्रभावत्त्वस्यैव गौणत्वात् । यत्र तु मुख्यमेव प्रभावत्त्वं तत्र प्रभाकरादावपि कालान्तरे प्रणाशो नानिष्टः, '**सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्**' इति श्रुतेः ॥

**१०४. चिद्गुणकत्वस्यापारमार्थिकत्वे युक्तिरनुभवश्च :** किं च यदि चिद्रूपचैतन्ययोर्भेद इष्यते प्रभाप्रभावद्द्रव्ययोरिव तदा, दीपदृष्टान्तेन सावयवत्वमप्यात्मनोऽनिष्टं बलादाकृष्यते । अथ न हि दृष्टान्ते

सर्वसाम्यमिति कृत्वा प्रभाप्रभावतोर्भेद एवात्र साम्यं विवक्षितमिति स्वीक्रियते । तदा राहो शिर इति व्यपदेशभेदान्न यथा वस्तुभेदः प्रकृतेऽपि तथैवेति प्रतिवदितु किमुत्तरम्? अस्ति चात्र प्रतिपक्षे न्यायानुग्रहः । न हि यथा दीपप्रभयोः शेषशेषित्व तथात्रालक्ष्यते कि चिदपि चिद्रूपचिद्गुणयो । ननु लक्ष्यत एवाहं जानमीति भेद ? नेत्युच्यते । यद्यहमिति चिद्रूपता जानामीति च चिद्गुणता स्वीक्रियते तत सुषुप्तौ मामप्यह न जानामीति प्रत्ययबलादचिद्रूपतामचिद्गुणता चात्मनि किमिति न शङ्केथा ? ननु परामर्श एवायम्, न तु सुषुप्त्यनुभवः । न हि सुषुप्ते मामन्य वा जानामीति न जानामीति वाऽनुभवोऽस्तीति । अहो मूलच्छेदने पाण्डित्यम्! सुषुप्तौ यदि कोऽप्यनुभवो नास्ति, तर्हि सुतरा न चिद्गुणता सम्भवत्यात्मन ॥

१०५. **चिद्रूपयोर्गुणगुणित्वानुपपत्तिः** : अपि च ज्ञानस्वरूपमात्मनि नित्यं वर्तत इति ज्ञानगुणकमात्मान मन्यसे चेत्, जानात्यात्मा इति कृत्वा ज्ञानक्रियाश्रयिणमपि तं कुतो न मन्येथा ? अथ मनुषे – ज्ञान नाम ज्ञानद्रव्यमेवात्मशेषभूतम् । ततो न परमार्थतो गुणः शौक्ल्यादिवत् क्रिया वा गमनादिवत् । तस्माज्ज्ञानाश्रयत्वस्य स्वाभाविकत्व ज्ञानरूपात्मनोऽभिन्नत्व च दर्शयितुमेव गुणत्वेन परिभाष्यते । तत्परिभाषाया तु नात्यन्तमाग्रह इति । तदप्यनुचितमेव[१]। ज्ञानस्यान्यशेषतायोगात् । तथा हि – शेषिभूत आत्मा ज्ञानादन्यभूतत्वाज्जडरूप एष्टव्य । तच्चानिष्टं भवत । न च जडस्य ज्ञानशेषिता सम्भवति, घटादीनामपि ज्ञानगुणकत्वप्रसङ्गात् । नाप्यसौ शेषी ज्ञानरूप इति युज्यते । शेषशेषिभावस्य भेदसव्यपेक्षत्वात् ।

१ सू० य० ७–१७, १८, १९

अत्र हि शेषशेषिणोरुभयोरपि ज्ञानरूपतैवोपगम्यते । न च ज्ञानगुणादन्यस्य ज्ञानरूपात्मन परमार्थतोऽपि तद्भिन्नत्वम्, जडत्वप्रसङ्गात्, ज्ञानरूपस्य जडत्वे विरोधाच्च ॥

एतेन चिद्रूप आत्मा चेतनरूपस्येश्वरस्य शेष इत्यपि निरस्तम्, चिच्चेतनयोर्भेदानिरूपणात्। चेतनत्वसिद्धिशेषत्वसिद्ध्यो· परस्पराश्रयश्च स्फुटो दोष । तदेवं चिद्द्रव्यमेव चिदात्मशेषभूत गुणत्वेन परिभाष्यत इत्ययुक्तम्। तस्माद्दुर्निरूपत्वादप्रतीतत्वाच्च चिद्भिन्नज्ञानगुणस्य, चिद्रूपचिद्गुणयोर्भेदो दुर्भण ॥

**१०६. जानामीति व्यवहारे प्रकृतिप्रत्ययार्थविवेकः :** तथापि जानातीति प्रतीतेरात्मनि भासत एव ज्ञानगुण । कथमत्र भवत· श्रद्धामनुरुध्य मन समादध्याम्? प्रतीतिमात्रशरणो भवान्, यथाप्रतीत्येव समादधातु । कथम्? बुद्धौ परिणामलक्षणा क्रिया प्रतीयते, आत्मनि च बुद्धिविगमेऽपि चिद्रूपता प्रतीयते, सुषुप्तेऽपि चैतन्यानुवृत्ते । तस्माज्जानातीत्यत्र ज्ञानार्थो नित्यमात्मैव । क्रियाश्रयत्वं तु सदा बुद्धावेव, बुद्धिरहिते चिदात्मन्यदर्शनात्। व्यवहारे तु बुद्धेः क्रियाश्रयत्वमात्मनि, तस्य च चिद्रूपत्व बुद्धौ समारोप्य वक्ति लोको जानात्यात्मेति[1]। यथा मनुष्योऽहमिति व्यवहारे देहात्मनो· स्वभावप्रविवेकाभाव एवापराध्यति, न पुनर्देह एव भवितुमर्हत्यात्मा । तथा जानात्यात्मेति व्यवहारोऽप्यात्मबुद्धिविवेकाभावनिबन्धन ॥

**१०७. अज्ञातर्यप्यात्मनि क्षेत्रज्ञेत्यादिव्यपदेशोपपत्तिः :** ननु नित्यज्ञानक्रियाश्रयत्वाभावे कथ 'क्षेत्रज्ञ' इति वैदिकव्यवहारो घटते

१. उ० १८–६५

'ज्ञोऽत एव' इति च बादरायणीयं सूत्रम्[1] कर्त्रर्थे हि कप्रत्यय स्मर्यते । सत्यम् । कर्तृत्वं तूक्तयुक्त्या न मुख्यवृत्तं भवत्यात्मनीत्यौपचारिकमेव स्यात् । यथा 'प्रकाशक सविता' इत्यत्र। प्रत्ययविधान च नित्यक्रियाश्रयानित्यक्रियाश्रयोभयसाधारणम् । यथा हि 'तिष्ठन्ति पर्वता' इति नित्यनिवृत्तगतिमत्सु पर्वतेषु 'तिष्ठन्ति गाव' इति सम्भवद्गमनेषु गोषु च साधारण एव लडन्तप्रयोग तद्वदिहापि भविष्यति । तस्मान्नित्यचैतन्यस्वरूप एव सन्नात्मा ज्ञ इति परिभाष्यतेऽतो न विरोध. । व्यवहारस्तु जानातीति बुद्धिवृत्तिरूपज्ञानाद्विवेकाभावनिबन्धन एवेत्यनवद्यम् ॥

न जानात्यात्मेति व्यवहारोऽपि तद्वदेव बुद्धिपरिणामाभावमात्मन्यध्यस्य प्रवर्तते यो हि न जानामीति वदति सोऽपि सदा ज्ञानस्वरूप एव । अन्यथा ज्ञानाभावं कथमवगच्छेत्परामृशेद्वेति । तदेव जानातीति व्यवहारस्य भ्रान्त्याप्युपपत्ते प्रतीतिशरणैरात्मा ज्ञानरूप एवास्थेयः, तस्मिन्नंशगुणक्रियादयस्तु[2] व्यामुग्धै. कल्पिता इति च । एवमपहस्तिते ज्ञातृत्वाहन्ताविशेषवादे सुषुप्तावात्मा निर्विशेषज्ञानरूप इति प्रक्रिया निराबाधैव प्रतितिष्ठति ॥

## अविद्यास्वरूपविचारः

१०८. **आत्मानात्मनोरध्यास एवाविद्या :** अथेदानीमेतत्प्रक्रियानुरोधेनाविद्यास्वरूपविषयाश्रयकार्यनिमित्तनिवृत्त्यादिचिन्ता प्र-

१ उ० १५-४६.

२. कारणं कार्यमंशांशी जातिव्यक्ती गुणी गुण ।
क्रियाक्रियावानित्याद्या प्रकाशस्यैव कल्पना ॥　　—उ०

तन्यते। तत्राविद्या नाम चिदात्मन्यतद्रूपमिथ्यावस्तुतत्सम्बन्धप्रकल्पनम्, आत्मानात्मस्वरूपनिर्धारणाभावनिबन्धनं च तत्। व्यवहारदशायामात्मनोऽन्यत्वेन तद्विरुद्धधर्मत्त्वेन च यो यो विभाव्यते स सर्वोऽप्यत्रानात्मेति भण्यते। तस्य चानात्मनो निरपेक्षसत्त्वं न सम्भवि, आत्मापेक्षायाः सदा सत्त्वात्। न च सार्वदिकमव्यभिचरत्सत्त्वम्, सत्तावगमकालेऽप्यन्यथान्यथाभावात्। सुषुप्त्यादावत्यन्ताभावावगमाच्च। अत एवायमनात्मानिर्वचनीयो मिथ्येति पण्डितैर्निगद्यते। तद्विपर्ययेण चात्मा निरपेक्षसत्त्वो निर्विशेषानवच्छिन्नशुद्धचैतन्यस्वरूप इति चोच्यते। तत्र सुषुप्तौ पुरस्तादुपदर्शितप्रकारेणात्मनोऽन्यन्न किञ्चिदपि विद्यतेऽतः सिद्धस्तावदात्मा निरपेक्षसत्यस्वभावः। निर्विशेषश्चायमभ्युपगन्तव्य, यत्कारणं विशेषाभासाना मिथ्यात्वमेव निरूपकबुद्धिमारोहति। अत एवासौ निरवच्छिन्न एषितव्य, अवच्छेदकस्य पारमार्थिकस्यानवगमात्। शुद्धस्वरूपश्चायमात्मा, वस्त्वन्तरलेशगन्धिताया अस्मिन्नभावात्। चैतन्यस्वरूपश्च, स्वयसिद्धतथारूपत्वात्। व्यावहारिकप्रपञ्चप्रतिभासाधारत्वाच्च। तदेव मिथो विरुद्धस्वभावयोरात्मानात्मनोर्यदन्योन्यतापादनमन्योन्यधर्मवत्त्वेनाकलनं च तदेतदात्मविदो व्यवहरन्त्यविद्येति। लोके सा खल्वविद्येति भण्यते यद्व्यवधानाद्वस्तुस्वरूपं न निर्धार्यते यस्याश्च माहात्म्यादनर्थमृच्छति जन्तु। यथा कृशानोरुष्णतास्वभावानवबोधकाद्बालक पदे पदे तत्स्पृष्ट्वा दन्दह्यते। एवमिहाप्यात्मस्वरूपनिश्चयाभावादारोप्य[1] तस्मिन्मिथ्यावस्तुसम्भेद मन

१. प्रकृतसंख्यापूरणस्यात्मनोऽव्यवहितस्यापि बाह्यसंख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत् परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणयाविद्ययान्नमयादीन्बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वात्॥ —तै० भा०

आद्युपाधितादात्म्यतामात्मनि भावयमानो लोको जननमरणसुखदुःखादीन्यसकृदावृत्तीनि फलान्युपभुञ्जानस्तदाकृष्टचेताः स्वरूपप्रच्युतिमपि विस्मृत्य स्वकर्मवशाद्भ्रम्भ्रमीतीव । अतो निखिलानर्थहेतुरयमात्मानात्मनोः परस्पराध्यासः । तस्मादमुमेवाध्यासमविद्येति[1] मन्यन्ते तत्त्वचिन्तकाः । तदेवमुपवर्णितमविद्यास्वरूपम् ॥

१०९. **मूलाविद्यावादिनां मतेऽविद्यास्वरूपं तत्र विप्रतिपत्तिदर्शनं च :** अत्र मुह्यन्ति केचित् — नाध्यास एवाविद्या, का नाम, चिन्मात्राश्रयविषया, अनाद्यनिर्वचनीया, अविद्यामायादिशब्दभागिनी काचिच्छक्तिर्भावरूपा ब्रह्मात्मैकत्वलक्षणविद्यामात्रविध्वस्या । अध्यासस्तु तत्कार्यं तदन्वयव्यतिरेकित्वादविद्येत्युच्यते क्वचित् । एष एवाध्यासः कार्याविद्यापराभिधानः । तत्कारणभूता चाविद्या मूलाविद्येति संशब्द्यत इति । तदिदं तेषां कल्पनमसारं युक्त्यनुभवविरुद्धं निष्प्रयोजनं चेति सप्रपञ्चं दर्शितमस्माभिः । श्रुत्यादिविरोधश्चास्मिन् पक्षे दर्शयिष्यते । अपरे त्वत्र जीवाश्रयैव तादृश्यविद्या ब्रह्मविषया नाना चेति मेनिरे । अत्रापि मूलाविद्यायाः स्वरूपानुपपत्तिराश्रयानुपपत्तिर्जीवस्य मुक्त्यभावः प्रमाणाभावश्चाद्वैत इत्यादयो दोषा न दुरूहा इवेति नेह पुनः प्रपञ्च्यन्ते ॥

११०. **अध्यासरूपाविद्यायां शङ्का :** ये पुनर्वर्णितोभयवाद्यन्यतरपक्षमवलम्ब्यास्मदुक्ताविद्यालक्षणे दोषगणं निक्षेप्तुमीहन्ते तानिदानीं परिहरामः । आदौ तावत्स्वरूपसिद्धौ शङ्का भवति । यद्यध्यास एव हेतुः संसारानर्थस्य, ततो दुर्निरूपं भवति मनः । न ह्यमनाः

१ तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य .....॥ —सू० भा०

कश्चिदध्यसितुं क्षमते । तत्र समनसा सर्वमप्यध्यस्यते चेन्मन: केनाध्यस्यते? अथ नाध्यस्तमेव मनः । तत्कथं मृषा, तदभावे वा कथमद्वैतमिति? किञ्चात्मानात्मनोरध्यास केन क्रियत इति वक्तव्यम् । न तावदात्मना, तस्य शुद्धत्वाङ्गीकारात् । न च बुद्ध्या, बुद्धेः स्वविषयत्वासम्भवेन स्वगतधर्माणामन्यत्र दर्शनानवकाशात् । एवमध्यासासम्भवात् स्वरूपानुपपत्तिरस्त्येवाविद्याया अस्यामपि प्रक्रियायामिति ॥

**१११. अध्यासो निरूपणासहोऽप्यस्ति लोकप्रसिद्धेः** :अत्र परिहार । किमभिसन्धिरयमाक्षेपा? अध्यासस्य निरूपणासहत्वादध्यासो नास्तीति, आहोस्विन्मनस कारणानिरूपणेन प्रक्रियामेतामतिलङ्घ्याध्यासातिरिक्ता मूलाविद्या नाम मनस उपादानकारणमेवेष्टव्यमिति? आद्ये कल्पे किमध्यासस्य युक्त्यसहत्वान्नास्तित्व प्रतीत्यभावाद्वा तथात्वमिति? तत्राध्यासस्य युक्त्यनपेतत्त्वमभ्युपेयत एवास्माभि । युक्तिप्रमाणैर्यदि निश्चित एवाभविष्यदध्यासस्तदा वस्तु सन्नेवाभविष्यदिति मुधैव स्यात्तदपनयनप्रयतनम् । प्रतीतिस्तु सर्वजनीना नापह्नोतुं शक्यते केनचित् । तस्मात्प्रतीतिमात्रशरीरोऽध्यासोऽस्तीत्येव युक्तम् ॥

ननु चाध्यासकर्तुरात्मानात्मव्यतिरिक्तस्यासम्भवात्, तयोश्चात्मानात्मनोरशुद्धत्वस्वविषयत्वासम्भवाभ्यामध्यासकर्तृतानुपपत्तेर्नाध्यासो युक्त इत्युक्तम् । न चाकर्तृक एवाध्यास इति साम्प्रतम्, क्रियैव कारकमिति वैनाशिकमतप्रवेशप्रसङ्गात् । मैवम् । अध्यासकर्तुरपि

१. अविद्याया अविद्यात्वमिदमेव तु लक्षणम् ।
यत्प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत् ॥ —वा०

मुखाभासवदुपपद्यमानत्वात् । यथा हि दर्पणादौ प्रतिबिम्बितो मुखाभासः[1] साक्षान्मुखमेवेति वक्तुं न शक्यते, तदन्यस्य दर्पणानुकाररहितस्य ग्रीवास्थस्य पृथगुपलम्भात् । न च दर्पणादिधर्म एव सः, मुखवियुक्ते दर्पणादावदृष्टेः । नाप्युभयव्यतिरेकेण वस्तुसन्, स्वातन्त्र्येण कुत्राप्यसत्त्वात् । न चोभयोः स्वाभाविको धर्मः, प्रातिस्विकयोर्यथाकथञ्चिदपि मिलितयोर्वा तयोरदर्शनात् । यथा ह्यस्मिन् दृष्टान्त इदन्त्वेन दुर्निरूपोऽपि मुखाभासः प्रतीयते, तथैवात्मानात्मनोरध्यासकर्तास्त्येव चिदाभासः[2] प्रसिद्धो लोके । न चैव चिदाभासस्य प्रतीतिमात्रसिद्धौ तस्यावस्तुत्वात्, आत्मनश्च नित्यशुद्धबुद्धविकारविधुरस्वरूपत्वात्, मनसश्च जडस्य स्वातन्त्र्याभावान्न क्रियायां, कस्य[3] स्यादियमध्यासात्संसारिता यस्यापगमाय वेदान्तश्रवणमुपयुज्येतेति शङ्क्यम् । अविद्यामात्र एव ससारो न पुनः कस्यापि परमार्थत इत्यावेदनार्थत्वाच्छास्त्रस्य । तस्मादशक्यनिरूपणोऽप्यध्यासः प्रातीतिको विद्यत इत्यनवद्यैव प्रक्रिया ॥

१ 'मुखाभासो य आदर्शे ... ... ॥' —उ०
(इत्यादयोऽनुसन्धेयाः श्लोकाः)

२ जीवो हि नाम देवताया आभासमात्र बुद्ध्यादिभूतमात्रा ससर्गजनित आदर्श इव प्रविष्ट पुरुषप्रतिबिम्ब ॥ —छा० भा०

३ न दृशेरविकारित्वादाभासस्याप्यवस्तुतः ।
नाचितित्वादहङ्कर्तुः कस्य संसारिता भवेत् ? ॥
अविद्यामात्र एवातः संसारोऽस्त्वविवेकतः । —उ०

ननु छायामात्रश्चेज्जीवो मृषैव प्राप्तः, तथा परलोकेहलोकादि च तस्य । नैष दोषः, सदात्मना सत्यत्वाभ्युपगमात् । सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातम्, स्वतस्त्वनृतमेव । 'वाचारम्भणं विकारो नामधेयम्' इत्युक्तत्वात् । तथा जीवोऽपीति । यक्षानुरूपो हि बलिरिति न्यायप्रसिद्धिः ॥ —छा० भा०

**११२. मनसः कारणानिरूपणं न दोषाय :** अथ मनस कारणानिरूपणात्तदाश्रयोऽध्यासो न सेद्धुमर्हतीत्युच्यते । तत्रोत्तरम्—न ब्रूमो निरूपयाम. कारणं मनस इति । भवांस्तु ददात्वत्र दृष्टिं यदस्य कारणमशक्यनिरूपणमेव वस्तुत इति । कथम्? सर्वं हि कर्तृक्रियाकारकफलजातमध्यासमाश्रित्यैव स्वं समश्नुते । तस्मादभ्युपगम्यैव यथाप्राप्तं मनआत्मनो सम्बन्धस्याध्यासिकस्य सत्त्व लोके कार्यकारणादिभावोऽन्विष्यते । तदेवमध्यासादर्वाचीन. सिध्यन् कार्यकारणभावोऽध्यासात्पूर्वमपीष्यते चेत् तदानीमतिप्रसङ्ग एव स्यात् । मनसो ह्यात्मन. कारणनिश्चये सामर्थ्यं न शक्योद्भावनम् । न चास्ति वस्तुनिरूपणे मनसोऽतिरिक्तमान्तरं साधनम् । न चागमादिकमस्ति साधनान्तरमिति साम्प्रतम्, आगमादिबोधितविषयस्यापि मनसैवानुद्रष्टव्यत्वात् । न चागमोऽपि मनसो मन'कारणत्वनिरूपणे सामर्थ्यमाधातुमलम्, प्रमाणाना स्वभाववैपरीत्यकरणे कर्तृत्वस्यादृष्टत्वात् । मनसश्च स्वनिरूपणं स्वस्कन्धारोहणवदशक्यकरणमिति वस्तुस्वभावकृतमेतन्मनसः कारणानिरूपणं नाम न पुनर्वक्तृदोषनिबन्धनम् । तस्मादतिप्रश्न एवायं मनसः किं कारणमिति ॥

**११३. मूलाविद्यायाः कारणत्वेनाभ्युपगमेऽपि कारणाकाङ्क्षा न शाम्यति :** यत्पुनरुपदिष्टं स्वीक्रियतां मन'कारणमविद्येति । तदनादेयम् । यस्मान्मनःकारणत्वेनाभिमताया अपि मूलाविद्यायाः कारणेच्छा समस्त्येव । एवं तस्यापि कारणं तत्कारणस्यापि कारणान्तरमन्विष्य प्रधावतोऽनवस्थादौस्थ्यमेव फलं स्यात् । ननु मूलविद्यायाः सर्वकारणत्वादनादित्वाच्च नास्ति कारणाशङ्का । न तथा वक्तुं पार्यते, अनादितावादस्य निरस्तत्वात् ॥

अभ्युपगम्याप्युच्यते दोषः । यस्मादनादिता कालमपेक्षते । कालापेक्षिणी मूलाविद्या च कालकारणं न स्यादिति नैवोपशाम्येत कारणतृष्णा । न च कालस्य कारण शक्यशङ्कम् । कारणबुद्धेः कालबुद्ध्यपेक्षत्वात् । अथ ब्रह्मैव कालकारण भविष्यति । अत्यल्पमिद-मुच्यते । ब्रह्मैव हि सर्वस्यापि कारण व्यवहारदृष्ट्या वेदान्तिमते । ब्रह्मकारणत्वाभ्युपगमश्च न परमार्थकार्यकारणवादस्थापनाय, कस्मै तर्हि, सकलविधकारणसम्भावनापाकरणायेति नैव स्यादपेक्षणं कस्य-चिदन्तर्गडोः । तथा च न मूलाविद्यासिद्धिः । किं चाध्यासाश्रयं मनः, मनसश्च कारणमविद्येति चेत् स्वीक्रियते, ततो वक्तव्य भवत्यविद्या किमध्यस्ता कि वा नेति । यदि नाध्यस्ता तर्हि परमार्थसती सेति कथ तन्निवृत्तिः? अथाध्यस्तैव सा, न तर्हि मनःकारणमित्युभयतः-पाशबन्धनम् । अतो न सम्यगेतत् ॥

अपि च मूलाविद्यायाः स्वरूपमेव नास्तीति प्रागेव प्रख्या-पितम् । कुतस्त्या पुनः सङ्कथा तस्या मनःकारणत्वस्य? तस्मान्म-नसः कारणाभावप्रसञ्जनं तत्कारणत्वेन मूलाविद्याप्रतिष्ठापने प्रत्याशा च मोघमेव क्रियते । तदेवमध्यासस्य नास्तित्वं न तत्कर्त्रभावान्न वा मनसः कारणाभावप्रसङ्गात् । न चास्त्यन्यद्बाधकम् । अतः परि-त्याज्या स्वरूपानुपपत्तिशङ्केति स्फुटम् ॥

## अविद्याविषयविचारः

**११४. अविद्याविषये विप्रतिपत्तिः:** अधुना किंविषयेय-मविद्येति विचार्यते । नन्वध्यास एव चेदात्मानात्मनोरविद्या, तत एव विज्ञायते यदुभयविषयिणीयमिति किं पुनः कृतकरणेन?

न, शङ्कान्तरसम्भवात् । आत्मनि हि न विषयत्वसम्भवः, विषयित्वात्तस्य । केवलानात्मविषया तु नाभ्युपगम्यतेऽविद्या । अतः संशयः । इतश्च विचार्यमेतत् । यत आत्मविषयिणी न भवति चेदविद्या तर्हि सा नैव विनाश्या भवेदात्मविद्यया । इष्यते त्वात्मज्ञाननाश्या सेति । तस्मात् किंविषयेयमविद्येत्यवश्यमवधारणीयमेतत् ॥

किमत्र ज्याय· ? विषयत्वसम्भवादनात्मविषयमेवाज्ञानमिति । ननु कुत्राध्यास इत्याकाङ्क्षायामात्मनोऽपि विषयत्वं बलादानीयते । दर्शितश्च दोषोऽस्याविद्याविषयत्वाभावे व्यर्थमेव स्यात् ज्ञानमिति । मिथ्यात्वाच्चानात्मवस्तुन· तस्य विषयत्वानुपपत्ति· । अनात्मस्वरूपमेव ह्यज्ञानम्, अज्ञानमन्तरा तस्यादर्शनात् । ततश्च न तत्राविद्याकृत्यमस्ति । न ह्यज्ञानमावृत्याज्ञानं कमपि विशेष तत्र समुपजनयेदिति शक्य वक्तुम्, यथान्धकारमावृत्यान्धकार । न चाज्ञानोत्थितस्य रजतादे पूर्वसिद्धाज्ञानविषयता सम्भवति । अतोऽज्ञानरूपस्य मिथ्याज्ञानरूपस्य चाध्यासस्य नानात्मा विषय· ॥

यद्येवमात्मैवाविद्याविषयोऽस्तु, तत्रोक्तदोषानवतारादिति चेत् । अस्मिन्नपि पक्षे दोषोऽस्ति । कस्याध्यास इत्याकाङ्क्षायामनात्मनोऽपि हि विषयत्वं बलादानीयते । ज्ञानस्वरूपश्चायमात्मा । न च तस्मिन्नज्ञानसंसर्गो युक्तो भानाविव तमःसंसर्ग· । न चोभयविषया भवत्यविद्या । दोषद्वयानुषङ्गात् । न च प्रकारान्तरं पश्यामः । अतोऽविद्यां भावभूतामनङ्गीकृत्य न विषयतोपपत्तिरिति केचित् ॥

११५. **आत्मनः कल्पितं विषयत्वम् :** अत्रोच्यते– अविद्या तावल्लोके संशयज्ञानज्ञानाभावान्यथाज्ञानरूपा प्रसिद्धा । सर्वप्रकारापि

सा विषयविषयैवाञ्जसीत्यतो यद्यप्यविषयस्यात्मनो तद्विषयता न सम्भवति, तथाप्यात्मा व्यवहारकालेऽहंप्रत्ययविषयतां[1] प्राप्याविद्याविषय इव भवति । दर्शितं चान्यत्र यथात्मा स्वरूपतोऽहमर्थोऽप्यहंप्रत्ययालम्बनत्वमन्तरा न व्यवहार्यो भवति ॥

ननु तर्हि विषयिणोऽभावप्रसङ्गः । यदा विषयभावमापद्यत आत्मा कोऽन्यः सम्भाव्येत विषयी[?] द्वैतिभिः कल्पितं त्वात्मान्तरं स्वप्नद्रष्टानेककर्तृभोक्त्रवगमविषय इव मायामात्रमिति परित्यक्तं स्वप्नपरीक्षणावसरे । न चान्यं पश्यामो यो भवन् विषयी भवेदात्मानात्मनोर्विषययोः । किं च विषयीति यस्तर्क्येत स एवात्मा, स चाविषय एवेति हता बतेयमात्मनो विषयत्वसङ्कथेति । तदेतदनुक्तपरिभावनम् । नो खल्वस्माभिरुक्तं जातु विषय एवात्मा भवतीति, कथ तर्हि, विषय[2] इव भवतीति । आविद्यकमेवत्वात्मनो विषयत्वं बुद्ध्याद्युपाधिसम्बन्धनिमित्तत्वात् । यथा[3] नीरूपोऽपि राहुः शशिदिवाकरसम्बद्ध इव चक्षुर्विषय इव च । न तु वस्तुतोऽस्ति

१. न तावदयमेकान्तेनाविषय , अस्मत्प्रत्ययविषयत्वात् ॥ —सू० भा०

२. आत्मनो बुद्ध्युपाधिस्वरूपत्वेन भेदं परिकल्प्यात्मनात्मानं वेत्तीति संव्यवहार ॥ —के० भा०

३. नोपसर्पद्विमुञ्चद्वा शशिनं दृश्यते तम ।
विसृजंश्चोपसर्जंश्च तद्वत्पश्य शरीरिणम् ॥
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्त· शरीरीत्युपलभ्यते ॥
यथा चन्द्रार्कनिर्मुक्त· स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥ —मो०
(शरीरग्रहणमुभयविधशरीरसंग्रहार्थम्, उभयोरपि तत्रैवाध्यासात् ।)

कलानिधेः सूर्यस्य वा तत्सम्बन्धः । नापि राहोश्चक्षुर्विषयत्वमेव स्वातन्त्र्येण, तस्य छायामात्रस्यावस्तुत्वात्तदसिद्धेः । एवमयमात्मापि स्वयमविषय एव सन् बुद्ध्यादीनाम्, बुद्ध्याद्युपाधिसान्निध्यादहंकञ्चुकसंवृत इव बुद्धिविषयत्वमापन्न इव च भवतीत्यदोषः ॥

स्वतस्तु[1] नाविद्याविषयत्वम्, तत्साक्षित्वात् । तस्मादिदं निश्चीयते यद्बुद्धिसम्बन्धाध्यासत एवात्मा विषय इव भातीति । आत्मनो विषयत्वं च य प्रतिभाति स विद्यत एव द्रष्टा विषय्यात्माध्यासदशायामपीति न जातु विषयिता भङ्ग । न चाध्यासविषयत्वेनात्मन किञ्चिद्दुष्येत्, अध्यस्यमाननीलगुणकाकाशवत् । न हीन्द्रियविषयत्वेन नीलगुणकत्वेन च कल्प्यमान आकाश प्रत्यक्षविषय एव भवति भूततो नीलगुणको वा । एवं विषयत्वेन कल्प्यमानोऽप्यात्मा स्वतो न विषय । न च विषयत्वं विषयित्वं च युगपत्सम्भवेताम् । यो ह्यंशः सम्मतो विषयित्वेन तस्य विषयत्वं नैव शक्य कल्पयितुम् । तत्रापि विषय्यपेक्षाया पर्यवसानाभावप्रसङ्गात् । एकस्य कर्मकर्तृत्वविरोधात् विषय्यन्तरानिरूपणाच्च । तदेवं विषयांशमुज्झित्वा शिष्टोऽशः सदाविकृत एवेति स एवात्मा । निरंशत्वाच्चात्मनो[2] विषयांशो न भाविको भवेत् । तस्मादविषय एव सन्नात्मा विषय इव भवतीति निर्दोषम् ॥

१ अविद्यासाक्ष्यपि प्रत्यक्सदानस्तमितोदित ।
अविद्यया व्यवहितस्तद्बलेनैव तद्वच ॥ —वा०

(तद्बलेनैव—अविद्याबलेनैव, तद्वच —अविद्याव्यवहित इति वचनम् ।)

२. एकस्यैव विषयविषयित्वं दीपवदिति चेत् । न, युगपदसम्भवात्, आत्मस्यंशानुपपत्तेश्च ॥ —बृ० भा०

११६. **विषयत्वमप्यात्मनो न स्वाभाविकम्** : अत्राह चोदकः— अध्यासवेलाया विषयिस्वरूप आत्मा प्रकाशते न वा? यदि प्रकाशते कथमध्यासः? अथ न प्रकाशते, तत्किं कारणम्? न हि स्वभावो भावानां कदाचिदपि निवर्तेत । न च मन्तव्यम्— सामान्यतो गृहीत-स्वरूपोऽप्यात्मा विशेषस्वरूपेण न भासते तदेति । न हि निर्विशेष-चिदात्मनि सामान्यविशेषभावोऽवकल्पते । तस्माद्दुर्घटमेतदिति । अत्रोच्यते— न कोऽप्येवमाह यदात्मा जातुचिन्न प्रकाशत इति । न चाध्यासानुपपत्तिः । स्वरूपतः स्फुरणेऽप्यध्यासविरोध्याकारेणा-स्फुरणमेव हि पर्याप्तमध्यासोपपादनाय ॥

किं कारणं पुनः सदा स्फुरणस्वभावोऽपि न भासतेऽध्यास-विरोध्याकारेणेति? अविचारादिति ब्रूमः । नो खलु स्वभावोऽयमा-त्मनो यदध्यासविरोध्याकारेण भासमानत्वम्, किं तु भासमानत्व-मेव तस्य स्वभावः । अध्यासनिरोधकत्वं तु प्रमाणोत्पन्नज्ञानकृत्यम् । तच्च ज्ञानं यस्य नोत्पन्नं तस्याविचारादेव तथा न भासत आत्मा । यत्पुनरुच्यते निर्विशेषचिदात्मनि सामान्यविशेषभावो नावकल्पत इति । तत्रोमिति ब्रूमः । तथापि तु यस्मिन्निर्विशेषचिदात्मनि सामान्यविशेषभावाभावः प्रतिज्ञायते तस्य तदेव विशेषस्वरूपम् । अविज्ञाते तु तस्मिन् भासमानं तु स्वरूपं सामान्यमित्ययमपि विभागोऽध्यासापेक्ष एव ॥

ननु चैवमध्यासोऽप्यध्याससापेक्ष इति जातम् । सत्यमेव तत् । न खल्वयमविद्याख्योऽध्यासः स्वरूपेण वस्त्वित्यभ्युपगम्यते, कथं तर्हि, केवलमविचारसिद्ध इति प्रागेवावेदितम् । तदेवं यथा विष-यत्वं तथा विषयित्वमप्यात्मनो न भवति स्वाभाविको धर्मः, उभयो-

रप्यध्यासमापेक्षत्वात् । अतो विषयविषयिविभागग्रहणस्य भ्रान्तिसिद्धत्वान्नात्र महानाग्रहः कार्यः ॥

११७ **अविद्याविषयत्वयोर्न पौर्वापर्यम्**: ननु भ्रान्तिकाले वा कथं विषयत्वम्? विषयत्वमात्मनोऽपेक्षते समारोपः, तदपेक्षं च विषयत्वमित्यन्योन्योदीक्षादोषादिति चेत् । मैवम् । स्वप्नवद्युगपत्सम्भवात् । यथा हि स्वप्ने युगपदुद्भूतेष्वेव पूर्वापरीभावः कालिकः प्रतीयते । न तु तावता तात्त्विक एव क्रमः । तथात्राप्यात्मनो विषयत्वं विषयेऽध्यासश्चेत्युभयं परस्परानपेक्षमेव युगपत्सम्भवति, मिथ्याप्रत्ययत्वाविशेषात् । न ह्यात्मनि प्रथमं तत्त्वतो विषयत्वं सम्पाद्य ततोऽन्तःकरणादिषु विषयेषु तत्त्वत एवाध्यस्यतीत्यभ्युपगम्यते, शक्याभ्युपगमं वा, तेनादोषः । तस्मादविद्याविषय आत्मा कल्प्यते व्यवहारविषये । वास्तविकं तु विषयत्वं पराणुद्यतेऽतो न काचिदनुपपत्तिः ॥

## अविद्याश्रयविचारः

११८. **अविद्याश्रये शङ्का** : स्यादेतत्– यदेतदुपपादितं विषयत्वं न तन्निरूप्यमाणं घटनां प्राञ्चतीव । यावतास्या अविद्याया आश्रय एव नोपपद्यते । तथा हि – किमाश्रित्येयमविद्या गोचरीकुर्यादात्मानम्? न तावद्विषयमाश्रित्य, तस्य ज्ञानाश्रयत्वासम्भवात् । न खलु ज्ञानाज्ञाने व्याश्रये भवितुमर्हतः । आत्मनि तु ज्ञानमज्ञानं चेत्युभयं सम्भाव्येत तदा यदा तदभिसम्बन्धविनिर्मुक्तो ज्ञानाज्ञानान्यतरेणात्मनः संसर्गमुपलब्धा व्यतिरिक्तः कश्चिदभ्युपगम्यते । न त्वात्मानात्मव्यतिरिक्तस्तृतीयोऽभ्युपगम्यते पदार्थ उपलभ्यते वा । ततो निराश्रयमेवाज्ञानमिति स्वाश्रयाभावे कुतोऽज्ञानम्, कुतस्तरां च तद्विषयत्वमात्मन इति?

**११९. अविद्याश्रयोऽपि कल्पितः :** सत्यमेव भवेद्यदि परमार्थतो विषयत्वमुररीक्रियेत । कल्पितं तु विषयत्वम् । कल्पितविषयत्वोपपादकं चास्ति कल्पितमाश्रयवत्त्वमप्यविद्यायाः । तथा हि पूर्वप्रोक्त चिदाभास एव लौकिकपरिकल्पित[1] आत्मा भवत्याश्रयोऽध्यासस्येति । वस्तुवृत्तेन तु न शक्यमेव निरूपयितुमविद्याया· सविषयत्वं साश्रयत्वं वा, भाविकस्य विनिवृत्त्यनुपपत्तेः ॥

**१२०. अविद्याया एव कल्पितं सत्त्वम् :** ननु भवतु भाविकमेव विषयत्वमाश्रयत्वं च । तत्र मा स्म भूत्स्वनाशादविद्याविषयत्वस्य तदाश्रयत्वस्य वा विनिवृत्तिः । अविद्यायास्तु निवृत्त्या तद्विनिवृत्तिर्भविष्यति । भवेदेवमपि यद्यविद्याया अपि निवृत्तिरवकल्पेत वास्तवी । अविद्याया एव हि कल्पितं सत्त्वम्, कुतस्त्या तन्निवृत्तिसङ्कथेति । इय ह्यविद्या न केवलं सुषुप्त्यादौ न विद्यते, किं तु यदापि जागरितादौ तस्यास्तित्वश्रद्धा, तदापि विचार्यमाणे तत्त्वत· स्वरूपेणाज्ञान नाम ज्ञानव्यतिरेकेण न वस्तुसद्भवति ॥

**१२१. अज्ञानस्य स्वरूपतो ज्ञानव्यतिरेकेणासत्त्वम् :** अज्ञानमिति[2] हि ज्ञानाभावो वा स्यात् संशयज्ञानमथवा मृषाज्ञानम् । तत्र ज्ञानाभावो न स्वरूपत· सेद्धुमर्हति । न हि विद्यमाने ज्ञाने तदभावोऽपि पदं लभेत । ननु 'ज्ञानं मे जातमिदानीं ज्ञानं नष्टम्'इत्यनुभवसिद्धो ज्ञानाभाव कथमपह्नूयते? मैवम्, ज्ञानं जातमिति प्रतीते·

१ नित्यविज्ञानस्वरूपेणाकाशवदप्रचलितात्मनाऽन्तर्गर्भभूतेन बाह्यो बुद्ध्यात्मा तद्विलक्षणोऽर्चिभिरिवाग्नि· प्रत्ययैराविर्भावतिरोभावधर्मकैर्विज्ञानाभासस्वरूपैरनित्यविज्ञान आत्मा सुखी दु·खीत्यभ्युपगम्यते लौकिकै· ॥ —के० वा० भा०

२ बृ० भा० ३–३–१.

पूर्वम्, ज्ञान नष्टमिति प्रत्ययात् परं च ज्ञानाभावप्रसङ्गात्। न चेष्टापत्तिः। ज्ञानोत्पत्तिं ज्ञाननाशं च ज्ञातुं ज्ञानस्याभावात् तज्ज्ञानासिद्धेः जगदान्ध्यप्रसङ्गात्। नन्वन्यदेव तज्ज्ञानम्, येनानुभूयेते ज्ञानोत्पत्तिविनाशौ। तर्हि कथय किं तज्ज्ञानविषयकं ज्ञानमुत्पत्तिनाशविधुरमुत नेति। यदि नाशवत्, तदा तस्याभावग्राहकमन्यज्ज्ञानं तस्याप्यन्यदिति शृङ्खलाया अन्तं कदा द्रष्टा भवान्? अथ विनाशविधुरं ज्ञानज्ञानं द्वितीयम्, प्रथमं तु विषयज्ञान न तथेति मन्यसे। तदा वक्तुमर्हसि को विशेषोऽस्ति प्रथमे येन स एवार्हति विषयं विषयीकर्तुं न पुनरुभयसिद्धं नित्यं ज्ञानमिति। किं चेदं ज्ञानत्वं नाम यदुभयसाधारणं सत् प्रथमस्यापि ज्ञानत्वमावहेत्? न केवलं विषयित्वम्, प्रदीपादावपि प्रसङ्गात्। न च निरपेक्षविषयित्वं त्वदभिमतज्ञानेऽसम्भवात्। न चान्यः शक्योत्प्रेक्षणोऽनतिप्रसङ्गी धर्मः, येन तादृशं ज्ञानं प्राणान् धारयेत्। किञ्चान्यत्। घटज्ञानकाले तज्ज्ञानव्यतिरिक्तं द्वितीयं ज्ञानं नास्तीति वदितुं न पार्यते, तस्य नित्यत्वाभ्युपगमात्। तथा च तेनैवालं किमनेन?

ननु यदि विषयविषयं ज्ञानमात्मचैतन्यमेव स्यात् ततः सर्वाण्यपि विषयाणि युगपदवतिष्ठेरन्निति न कदाचिद्विषयविस्मरणं स्यात्। तस्मादालोकेन्द्रियादिभ्यो ज्ञानमुत्पद्यमान निरुद्ध्यमानं चान्यदात्मचैतन्यं चान्यन्नित्यस्वरूपमिति युक्तम्। न, तथापि दोषादनिस्तारात्। अनेकोत्पद्यमाननिरुध्यमानज्ञानविषयकत्वेऽपि नित्यज्ञानस्य तानि ज्ञानानि युगपदवतिष्ठेरन्निति समानो दोष.। न च नित्यज्ञानैकवादिनोऽस्त्ययमपि दोषः। वृत्तेरपि विषयत्वात् तदपेक्षयैव विषयान्तरोपस्थितिव्यवस्थोपपत्तेः। यथा भवत्कल्पितानित्यज्ञानस्य

ज्ञानमात्रत्वेऽपीन्द्रियविशेषमपेक्ष्यैव तत्तद्विषयपरिच्छेदो न स्वत इति न युगपदवस्थितिरेवमुभयसम्मतस्य नित्यज्ञानस्यापि मनोवृत्तिविशेषेन्द्रियाद्यपेक्ष एव तत्तद्विषयपरिच्छेदो भविष्यति व्यवहारदृष्ट्येति न कोऽपि दोषः । तदित्थं नित्यज्ञानव्यतिरिक्तस्य विनाशिज्ञानस्य दुर्निरूपत्वात्सिद्धं ज्ञानाभावो नाम नास्त्येव परमार्थत इति । 'ज्ञानं मे जात ज्ञानं नष्टम्' इत्यादिव्यवहारस्तु तद्विषयस्य जन्मनाशापेक्षमित्यविरोध १ ॥

एवमेव संशयज्ञानमृषाज्ञाने अपि ज्ञानव्यतिरेकेण न वस्तुसती । ज्ञानमेव तु विषयोपधानविशेषवशाद्व्यवह्रियते तथा तथेति मन्तव्यम् । यद्यपि सम्यग्ज्ञानसंशयज्ञानमिथ्याज्ञानपदार्थाः परस्परं भिन्ना एव भवितुमर्हन्ति, अन्यथा भ्रमप्रमासाङ्कर्यप्रसङ्गात् । तथापि नात्रानुगतज्ञानस्य स्वतोऽनेकत्वम्, विषयोपधानात्तु तथा तथा व्यवहार इत्यनवद्यम् । यस्य तु संशयज्ञानादीनि भिन्नान्येव परस्परम्, तस्य तेषा स्वयंसिद्धत्वाभावे परस्परवेद्यत्वाभावे च ज्ञानत्वस्यैव दुर्भणत्वप्रसङ्गः । न हि संशयज्ञानं स्वसंवेद्यं मिथ्याज्ञानसंवेद्यं वा भवति । तथापि ज्ञानत्वे कः प्रतिबन्ध इति चेत् । घटज्ञानपटज्ञानयोर्ज्ञानत्वात् किं घटपटयोरपि ज्ञानत्वमप्रतिहतम्? नो चेदिहापि संशयमिथ्याज्ञानयोरनुगतं ज्ञानमेकमेव, संशयत्वमिथ्यात्वरूपं तु विशेषणं न स्वत, किन्तूपधानवशादित्यवश्यमभ्युपगन्तव्यं भवति । तदेवं ज्ञानव्यतिरेकेण नास्त्यज्ञानं नाम वस्तुसदिति सिद्धम् ॥

१ तस्मादजायमानैव जायमानेव लक्ष्यते ।
अनुभूतिस्तदज्ञानहेतूत्थानात्मजन्मना ॥
तद्विनाशेऽपि तत्साक्षाद्विनश्यन्तीव लक्ष्यते ।
यतोऽत कार्यता तस्या नेश्वरोऽपि प्रसाधयेत् ॥ —वा०

**१२२. व्यावहारिकदृष्ट्यैवाविद्यातदाश्रयादिचिन्ता :** तदेवं यदा वराक्यविद्यापि स्वरूपेण न सिध्यति तदा कैव कथा तदाश्रयविषययो·? तथापि व्यावहारिकदृष्ट्या सम्भवत्येव सर्वोऽप्यय विचारः । यदा खलु विचारात्प्राग्यथाप्रसिद्धात्मानात्मविभाग स्वीक्रियते तदानीमविद्या विद्यत एवात्मानात्मनोर्मिथ सम्बन्धारोपणरूपा । विद्यत[1] एव चाविद्यागृहीतो मायत्मा चिदाभासो ज्ञानाज्ञानोभयाश्रय· । यमेव चाश्रित्याविद्याविषय इव भवत्यात्मेत्यवोचाम । तस्मादविद्ययात्मत्वेन गृहीत आत्माभासोऽध्यासाश्रयो विषयश्चेति व्यवहार इत्यल पल्लवितेन ॥

## अविद्याकार्यचिन्ता

**१२३. अविद्याकार्यस्वरूपम् :** अथाविद्याकार्यमधिकृत्य चिन्ता प्रतायते । मिथ्यावस्तुप्रत्युपस्थापनमतस्मिंस्तद्बुद्धिश्चेत्येते प्रसिद्धे एवाध्यासकार्ये सर्वत्र । अविद्यमानं हि रजतं विद्यमानवदुपस्थाप्यारोप्यते शुक्तिकायाम् । एवमेवात्मन्यप्यनात्माध्यास· । मिथ्याकल्पनतदारोपयोरन्तराले कदाचित्संशयोऽपि जायेत । यथा शुक्तिका वा स्यादिदं कलधौतं वेति विशयानो कलधौतमेवेदमित्यन्ततो विपर्यस्यति । सर्वस्यास्य निमित्तं वस्तुस्वरूपानवबोध· । तदेवमात्मस्वरूपाव-

१ नन्वात्मन्यप्यज्ञानं न घटत इत्याशङ्काया नैष्कर्म्यसिद्धिकृत – घटत एव । कथम् ? अज्ञानमात्रनिमित्तत्वात्तद्विभागस्य सर्पात्मतेव रज्ज्वा इति ॥
(तद्विभागस्य– आत्मानात्मविभागस्य, ज्ञानाज्ञानविभागस्येति वार्थ)

कस्य पुनरयमप्रबोध इति चेत् । यस्त्वं पृच्छसि तस्य त इति वदाम । नन्वहमीश्वर एवोक्त श्रुत्या । यद्येव प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रबोध. ॥
—सू० भा०, एवं गीताभाष्येऽपि ।

बोधाभावात्तस्मिन्ननात्मसंबन्धाभिमानतद्विषयकसंशयविपर्ययज्ञानाभासादयो मनोवृत्तय , ततश्च मिथ्याविषयविषयकौ रागद्वेषौ, तत पुनस्तदादानार्थं प्रहाणार्थं वा प्रवृत्तिनिवृत्ती, ततस्तत्फले सुखदु खे—इत्येवं सर्वमपि ससारप्रख्यानालम्बनमविद्याकार्यमित्याख्यायते ॥

१२४. **अविद्याकार्यमिति कोऽर्थः?** अत्र कार्यशब्दस्य प्रवृत्तिनिमित्त प्रति भवति विमर्श । किमेतत् सर्वमविद्याकर्तृकमित्यभिमत घटादिक कुलालादिकर्तृकं यथा, कि वा तां निमित्तीकृत्य दण्डादिकमिव घटादिकमात्मलाभ भजत इति, आहोस्विन्मृदादिकमिव घटादेरुपादानकारणमविद्याद्रव्यमिति । सर्वथापि दुर्घटमेव संसारस्याविद्याकार्यत्वं न प्रतिभाति । न हि तावद्भवत्यविद्यैव संसारं करोतीति, अचेतनत्वाप्रवृत्त्यनुपपत्ते । तस्या अपि कर्तृत्वे हेतुमन्वेषमाणाया मनीषाया निवारकाभावाच्च । न चाविद्यैव हेतु, ससार स्वयमेव स्वहेतुरित्यल किमनयेति पर्यनुयोगसम्भवात् । न च द्वितीयपक्षः क्षोदक्षम इव । अविद्याया हि निमित्तमात्रत्वे किमुपादानकः स्यात्ससार ? अविद्यैव मृदादिकमिव घटादेरुपादानमित्यपि न साधु लक्ष्यते । अविद्या खलु मृदादिवन्न भावद्रव्यम् । तस्य परिणामित्वादिधर्माङ्गीकारोऽप्याधुनिकवेदान्तितनयानां प्रमाणविप्रतिषिद्धमिति भवद्भिरेव सिद्धान्तितम् । अधुना पुनर्नवीनाविद्यास्वीकारेण तस्या उपादानत्ववादे नाममात्रे विवादः स्यात् । तस्मात्किंविवक्षया संसारकारणत्वमुच्यतेऽविद्याया इति भवति बुभुत्सूनां शङ्का ॥

अत्रोच्यते—न वयं ब्रूमोऽविद्या तार्किकसमयसिद्धसमवाय्यसमवायिनिमित्ताख्यकारणप्रकारेष्वन्यतमत्वमभिलिङ्गत इति, येनोक्तदूषणपिशाचिकावेशो दुर्वार स्यात् । कथं तर्हि, मिथ्यास्वरूप-

त्वात्संसारस्य पारमार्थिकदृष्ट्या न स्वरूपमस्योपलभ्यत इति । न हि द्वितीयश्चन्द्रस्तैमिरिकदृष्टिदोषपरिणामं कारणीकृत्य लोकसिद्धचन्द्रवदेव स्वकारणाज्जन्म लभत इति प्रतियन्ति प्रतिपत्तारः, कथं तर्हि, एक एव संश्चन्द्रो दृष्टिदोषेण सद्वितीयवदाभासत इति । एवमिहापि मिथ्याप्रत्ययदोषेण संसारदर्शनम्, शास्त्रदृष्ट्या च तदपहार इत्यज्ञान संसारकारणमित्युच्यते । न पुनः कार्यकारणभावोऽपि विद्यते संसाराविद्ययोरित्युपगम्यते ॥

१२५. **अविद्यायाः कार्योपादानत्वमिति वादः** : ननु प्रतीत्यनुसारेण जगतो मिथ्याभूतस्य मिथ्याभूताविद्याकारणत्वमेव किमिति नाभ्युपगम्यते? यथा मिथ्यारजतस्य मिथ्याभूताज्ञानोपादानत्व शक्योपपादनं तथेहापि भविष्यति । तथा हि—शुक्त्यज्ञान विना कदापि नास्ति रजतबुद्धिः तदज्ञाननाशाच्चावश्यंभाविनी रजतविनष्टिश्चेत्यन्वयव्यतिरेकाभ्यां निश्चीयते यदज्ञानमेव रजतोपादानमिति । न च मृदाद्यनुविद्धघटादिप्रतीतिवदत्रापि स्यादज्ञानानुवेध इति शङ्क्यम्, सर्वांशेनानुवेधे राजशासनाभावाददर्शनाच्च । यत्किंचिदंशानुवेधन त्वत्रापि जडत्वादिना सम्भवत्येव । ननु चैव 'रूप्यमुत्पन्न रूप्य नष्टम्' इति प्रतीतिसमये बाधसमये च बुद्धिरुदीयात् । नैतदेवम् । उत्पादसमये शुक्त्यभिन्नतया ग्रहणात्, बाधसमये चात्यन्ताभावग्रहणाच्च तादृशबुद्धेः प्रतिरोधसम्भवात् । यस्तु पृच्छेत्, एवं रजतोत्पादेऽपि कथ तत्र त्रैकालिकनिषेधोपपत्तिरिति । तं ब्रूयात्—न रजतस्य स्वरूपेण तत्र निषेधः, केन तर्हि पारमार्थिकरूपेणेति, यद्वा लौकिकपरमार्थरजतस्यैवात्र निषेधः, न पुनः प्रतिभासमानस्यापीति न दोषः, तादृशरजतस्मरणस्यैवात्र निषेध्यरजतप्रसञ्जकत्वात् । किञ्च 'इदं

रजत'मित्यत्र भ्रमे व्यावहारिकप्रातिभासिकयोरभेदो भासते, नेदं रजतमिति तु बाधस्तयोर्भेदं बोधयतीत्यपि सूपपादम् । इत्यादि-तर्कबलमाश्रित्य सर्वप्रत्ययाना स्वविषयशूरत्वात्प्रातीतिकं रजतं तत्काल-मविद्योपादानकं समुत्पद्यत एवेति प्रतिष्ठापितं कैश्चित् । तत्किं प्रद्विष्यत इति चेत्, मैवम्, मिथ्यावस्तुनः कारणापेक्षाभावात् ॥

१२६. **मिथ्यावस्तुनः कारणापेक्षा नास्ति** : तथा हि – न तावन्मिथ्याभूतस्य कार्यस्य मिथ्याभूतं कारणम्, सत्यस्य तु कार्यस्य सत्य कारणमिति नियन्तुं शक्यते, मिथ्याभूतस्य मिथ्यात्वादेव कार्यकारणत्वादिव्यवस्थानर्हत्वात् । यच्च तर्क्यते शुक्त्यज्ञानान्वय-व्यतिरेकित्वाद्रजतस्य तदुपादानकत्वमिति । तदसत्, नात्र रजत-मासीदस्ति भविष्यति वेति बाधसमयबुद्धिविरोधात्। न च पारमार्थिक-स्वरूपविषया लौकिकपरमार्थरजतविषया वा तादृशी संविदिति सम्यक्, लौकिकपरमार्थरजतस्याप्यविद्याकार्यत्वाभ्युपगमाद्भवद्भिः ॥

१२७. **अविद्याकार्यत्वे सर्वस्य व्यावहारिकप्रातिभासक-त्वेन भिदा नोपपद्यते** : ननु अविद्याकार्यत्वेऽप्यागन्तुकदोषनिमित्तत्वं प्रातिभासिके विशेष·[१] मैवम् । दोषस्य व्यावहारिकत्वे, मिथ्याभूतस्य मिथ्याकारणकत्वनियमव्याघात· । प्रातिभासिकत्वे तु दोषान्तरगवेषण-प्रसङ्गेनानवस्थेति दूषणग्रासात् । मिथ्याभूतस्य मिथ्याकारणकत्वमुपा-दानविषय एवेति नैतद्दूषणमिति चेत् । न, मिथ्याकारणस्याज्ञानस्या-द्याप्यसिद्धत्वात् । यत्तूच्यते रजतमज्ञानोपादानकमिति निश्ची-यतेऽन्वयव्यतिरेकाभ्यामिति, तत्र शुक्तिकाज्ञानं नाम तज्ज्ञाना-भाव एव नान्यदिति यत्किञ्चिदेतत् । न च जाड्यादिसाम्या-दज्ञानमुपादानं भवेत् । व्यावहारिकरजतस्यापि जाड्यसाम्येन प्राति-

भासिकरजतत्वापातात् । अपि च स्वप्नजागरितयोर्भेदस्य दुरुपपाद-त्वात् स्वाप्नरजतजागरितरजतयोर्भेदस्य दुर्भणत्वादागन्तुकदोषनिमित्तं प्रातिभासिकमिति किमिदमुच्यते? तदेवं व्यावहारिकरजतव्यावर्त-कस्य साम्यस्य दर्शयितुमशक्यत्वादनुपपन्नमिदं शुक्त्यज्ञानोपादानकं मिथ्यारजतमिति ॥

११८. **प्रातिभासिकवस्तुन्यविद्याविशेषोपादानकत्वापेक्षणं न विद्यते :** ननु मूलाविद्या तावदन्या चिन्मात्राश्रिता, तत्कार्यं व्याव-हारिकसत्त्वविशिष्टं रजतम् । शुक्त्यवच्छिन्नचैतन्याश्रिता तु द्वितीया-विद्या रजताभासोपादानकारणीभूता । तदेतदसारम् । रजतस्य तदु-पादानकत्वे मानाभावात् ॥

ननु कथं मानाभावः? विद्यते खल्वनुमानं प्रमाणम् । रज-ताध्यासः साक्षादविद्योपादानकः, उपादानान्तरानुपपत्तौ सोपादान-त्वात्, आकाशवत् । आकाशस्य तावदविद्योपादानकत्वं श्रुति-सिद्धमस्ति '**मायां तु प्रकृतिं विद्यात्**' इति श्रुतेः । तद्वदत्रापि स्यादिति श्लिष्यते । न चान्तःकरणस्यैव कारणत्वमस्तु भ्रान्तिकालीनरजतस्येति युक्तम्, अन्तःकरणस्यापि सादित्वेनाविद्यापेक्षणात् । न च विपक्षे बाधकन्यायो न विद्यते, मिथ्यार्थावभासानुपपत्तेरेव बाधकत्वादिति चेत् । मैवम्, सोपादानत्वस्यैवासिद्धेः । न हि मिथ्याभूतस्य रज-तस्य सत्यरजतस्येव सोपादानत्वनिरुपादानत्वादितात्त्विकधर्मसम्बन्धो विद्यत इति शक्यसमर्थनमेतत् । न च व्यावहारिकसत्त्वविशिष्टस्यापि श्लिष्टं भवत्यविद्याकारणत्वं, अविद्यायाः परिणामित्वे मानाभाव इति प्रागेव दर्शितत्वात् । न चाकाशस्य सिद्धमस्त्यविद्योपादानत्वम् । '**मायां तु प्रकृतिं विद्यात्**' इति प्रकृतेः केवलं मायात्वाभिधानात् ।

प्रकृतिरेव मायिकी मिथ्याज्ञाननिमित्तेत्यर्थो न तु किञ्चिदुपादानमस्तीति। यत्तु मिथ्यार्थस्य प्रथनानुपपत्तिरेव तस्य सोपादानत्व साधयतीति, तदप्यपेशलम्। मिथ्यात्वादेव तत्प्रथनोपपत्ते। इदमेव हि मिथ्यात्वं नाम वस्तुनो, यद्वस्तुसन्नभवत्यथ च प्रथत इति। तस्मान्न प्रातिभासिकवस्तुनः सोपादानत्वम्, प्रागेव न भावाविद्यातिरिक्ताविद्योपादानकत्वम्, तस्याः स्वरूपस्यैवासिद्धेरिति ॥

१२९. **प्रातिभासिकवस्तूत्पत्तिनिषेधः** : 'उत्पन्नं रजतं विनष्टं रजतम्' इति प्रतीत्यभावाच्च रजतोत्पत्तिवचनमनुपपन्नम्। ननूक्तोऽत्र परिहारः — उत्पत्तिसमये शुक्त्यभिन्नतया ग्रहणात्, बाधसमये चात्यन्ताभावग्रहणाच्च तादृशबुद्धे प्रतिरोधसम्भव इति। मैवम्। प्रतीत्यनुसारेण रजत नासीत् प्रतीतिरेव[1] केवलमित्येव स्वीकर्तुमुचितत्वात्। न च मिथ्यैव रजतमभादिति बाधसमये प्रतीतेरनुभवानुसारिण्येव मिथ्यारजतोत्पत्तिकल्पनेति युक्तम्। न त्वेव रजतमासीदिति प्रतीत्या मिथ्यैवाभात्, भानमेवारजते रजतवदिति व्यवहारार्थः कल्पनीयो न पुनर्मिथ्यारजतमुत्पन्नमपीति ॥

नन्वेवमसत एव भानाङ्गीकारान्माध्यमिकपक्ष स्यात्। न। शुक्तेर्लौकिकपरमार्थस्यैव तादृशभानाधारत्वेन स्वीकारात्। नन्वेवं सति वैपरीत्यं स्याद्रजतमवभासते शुक्तिस्तु प्रतीतेरालम्बनमिति। न वैपरीत्यम्, शुक्त्यन्यस्य रजतस्यानङ्गीकारात्। शुक्तिरेव रजतव्यवहारयोग्या प्रतिभासत इति स्वीकारात्। यदि शुक्तेरेव ग्रहण तर्हि तस्या रजतात्मना विकल्पन कुत इति चेत्। दोषवशादधिष्ठानस्य सम्यगग्रहणादिति ब्रूमः ॥

१. प्रत्येत्येव हि केवलं रजतमिति न तु तत्र रजतमस्ति ॥ —सू० भा०

तस्माद्यथा शुक्तेरेव दोषनिमित्तो रजतरूप परिणाम इति वदन्तो दुष्टकारणजन्याया. प्रतीतेरेव रजतोत्पाद इति वदन्त. शुक्तौ विद्यमानमेव रजतं दुष्टकरणवद्भिरेव गृह्यत इति वदन्तश्च न भवन्त्यादरणीयाः, एवमेव रजतमनिर्वचनीयम्, तत्तादात्म्यम्, रजतत्वसंसर्ग. — इत्येतत्त्रिकमधिष्ठानभूतेदमि, रजते च तादात्म्योपहितेदम्, इदंतादात्म्यम्, इदन्त्वसंसर्गश्चेत्येतत्त्रिकमित्येवं पदार्थषट्कोत्पत्तिरङ्गीकरणीयेति वदन्तोऽप्यनवधेयवचना., मिथ्यावस्तूपत्तेरेवासम्भवादिति ज्ञेयम् ॥

एतेन 'इदं रजतम्' इत्यत्राधिष्ठानांशे अन्त करणवृत्तिः, रजतांशे त्वविद्यावृत्तिरिति च मिथ्यारजतोत्पत्तिमनुसृत्य तदाकारज्ञानाभासरूपाविद्यापरिणतिमप्यङ्गीकुर्वाणा अपि प्रत्युक्ता वेदितव्या. । शुक्त्याद्यतिरेकेण मिथ्याभूतरजतस्यैवाभावात्तदुत्पत्तेरिव तदाकाराविद्यापरिणामस्याप्यत्यन्तासम्भावितत्वात् । अधिष्ठानस्यैव दोषवशात्तद्विषयकान्त -करणवृत्त्या तथाभानसम्भवे वृत्त्यन्तरकल्पने प्रयोजनाभावाच्च । रजतं पश्यामीत्यादि सर्वजनसिद्धानुभवस्य चाक्षुषत्वनिराकरणेनाविद्यापरिणामविषयत्वकल्पने हेतोरभावाच्च । तदेवं नास्ति सर्वथा मिथ्यावस्तूत्पत्तिः ॥

येप्याहुरभावेतरकार्यस्योपादानसापेक्षत्वनियमादनिर्वचनीयरजतस्यानिर्वचनीयाविद्योपादानकत्त्वमभ्युपेयमिति । ते प्रतिबोधनीया — स्मर्तुमर्हन्ति भवन्तोऽनिर्वचनीयवादरहस्यमिति । इदमेव ह्यनिर्वचनीयत्वं नाम यत्केनापि प्रकारेण निर्वक्तुमशक्यत्वम्, अथ च भासमानत्वं वस्तुन इति । एवं च मिथ्यावस्तुनोऽनिर्वाच्यतामातिष्ठमानाः कथं तस्यैवानिर्वाच्यस्योपादानसापेक्षत्वप्रकारेण निर्वक्तुं प्रयतमाना नापत्रपेरन्निति ॥

ननु सत्त्वेनासत्त्वेन सदसत्त्वेन वा यद्विचारं न सहते तदेवानिर्वाच्यम्, न तु केनापि प्रकारेण निर्वक्तुमशक्यम् । तेनोपादानसापेक्षत्वेऽपि नानिर्वचनीयताहानि । न च परस्परविरुद्धयोः सदसत्त्वयोर्निषेधसमुच्चयोऽनुपपन्न इति शङ्क्यम्, तत्रापि निर्भराभावात् । तत्तत्प्रतियोगिदुर्निरूपतामात्रप्रकटनाय तद्विलक्षणत्वाभिलापादिति चेत् । मैवम् । सदसदादिरूपेण दुर्निरूपस्य कस्यापि रूपस्य वास्तविकस्यासम्भवे, तत एवोपादानापेक्षाया अप्यसम्भवात् तदवस्थमेवानिर्वचनीयताप्रतिज्ञाहानम् । तदेव नास्ति मिथ्यारजतस्य मिथ्याभूताज्ञानोपादानकत्वम् । तस्माज्जगत सकारणत्वम्, मूलाविद्यायास्तत्कारणत्वमिति चानुपपन्नम् ॥

इतश्चैतदेवम् । यत कार्यकारणभाव प्रपञ्चस्वरूपमेव भवति । देशकालनिमित्तबुद्ध्यन्वयव्यतिरेकाभ्यां तद्बुद्धिरेव जगद्बुद्धिरिति देशकालनिमित्तबुद्धिसंसर्गरहितं जगदेव नास्तीति ज्ञापित प्राक् । ततश्च प्रपञ्चे विद्यमानानां पदार्थाना परस्परं कार्यत्व कारणत्वं वोच्यमानं मुख्यवृत्त भवेन्न तु तद्बहिरपि कार्यकारणभावः प्रगल्भते संक्रमितुम् । तत्राविद्या मुख्यवृत्तेनैव प्रपञ्चकारणं यस्य मते, तस्य प्रपञ्चाद्बहिरपि प्रपञ्चो विद्यत इत्युक्तं भवेत् । यस्तु वदति – प्रपञ्चान्तर्गतस्यैवाविद्यायां तद्व्यतिरिक्तकारणत्वमुच्यते, न त्वेव प्रपञ्चाद्बहिरपि कार्यकारणभावः, अतो नैष दोष इति । त ब्रूयात्--प्रपञ्चकारणत्वेनाभिमता सेयमविद्या किं मिथ्या किं वा नेति । न तावद्द्वितीयः कल्पः, मिथ्याकार्यस्य मिथ्याकारणकत्वप्रतिज्ञाहानप्रसङ्गात् । आद्ये तु कल्पे अविद्याया मिथ्यात्वे मिथ्याभूतकारणान्तरगवेषणप्रसङ्गः, एवं तस्य तस्यापीत्यनवस्थादोषश्च प्रसज्यते । तद्दोषपरिहारायाविद्याया अनादि-

मिथ्यारूपत्वाङ्गीकारे कालस्य सत्यत्वापत्तिरित्यादयो दोषाः पूर्वोक्ता पुनरप्यावर्तन्त इति ॥

प्रपञ्चस्य कारणमविद्येति मते च जगतः कारण ब्रह्मेति श्रौत पक्षो न भवेत्समञ्जस इत्यनुसन्धेयम्। न चेदमाशङ्कनीयं श्रौतपक्षेऽप्येव दोषः प्रसज्यत इति। यथा च ब्रह्मकारणवादे एतद्दोषाभावस्तथाग्रे समुपपादयिष्यमाणत्वात्। तस्मात्सुष्ठूक्तं न मुख्यवृत्त्या जगतो मिथ्योपादानकर्तृत्वमिति ॥

## अविद्यानिमित्तविचारः

**१३०. अविद्यानिमित्तप्रश्नोऽनुपपन्नः :** अथ भवति समीक्षा किन्निमित्तेयमविद्येति । यदि हि सर्वमेव सनिमित्तं तदविद्यापि किञ्चिन्निमित्तमुदीक्षत इति युक्तम् । ततो वक्तव्यमस्या निमित्तमिति केचित् । अत्राभिदध्महे – प्रश्न एव तु तावन्नोपपद्यते । कथम्? देशकालनिमित्तबुद्धिरेव ह्यविद्याकार्यम्, तदन्वयव्यतिरेकानुविधायित्वात्। निमित्तबुद्धिरेव हि सर्वत्र निमित्तमाकाङ्क्षते। तादृशाकाङ्क्षावच्छिन्नस्वभावत्त्वादेव सा स्वस्या अपि केनचिन्निमित्तेन भाव्यमिति भावयति । परं तु सर्व सनिमित्तमिति नियममुद्भावयित्री निमित्तबुद्धिरेवेत्यतो निमित्तान्वेषणं सर्वमपि निमित्तबुद्धिरूपाविद्याकार्यसीम्न्येव न्याय्यं न तु तदतिपातिन्यपि । यद्यद्धि निमित्तमविद्याया इति परिकल्प्येत तत्सर्वमपि निमित्तबुद्धिविषयत्वादविद्यासीमान्तःपात्येव भवति। निमित्तं च कार्यान्तःपातिचेति तु व्याघातः। तस्मादनुपपन्नः प्रश्नः ॥

**१३१. अविद्या वस्तुतो न कस्यचित्कार्यं कारणं वा, ततोऽनुपपन्नः प्रश्नः :** ननु अध्यासव्यतिरिक्ताया अविद्याया अनभ्युप-

गमाद्भवन्मते उपपन्न एव भवति निमित्तप्रश्नः, उपादानप्रश्नश्च । तथा हि — यद्यात्मानात्माध्यासमात्रमेवाविद्या, तर्हि सा न सिद्ध्यायत आत्मानवबोधमन्तरा । अनवबोधश्च किंनिमित्त इत्यन्वेषणे भावरूपमज्ञानमन्यद्वा यत्किञ्चिन्निमित्तकारणमपेक्ष्यत एव । अपरं चास्मिन्मते ज्ञानाभाव एव मूलाज्ञानम्, तस्मादेव च मिथ्याज्ञानजनिरिति स्वीकृतं स्यात् । तथा चासतः सज्जन्माभ्युपगतं स्यात्, तच्च प्रमाणविरुद्धम् । न चान्तःकरणवृत्तिरूपस्याध्यासस्यान्तःकरणमेव भवत्युपादानमिति नासतः सज्जन्मप्रसङ्ग इति शङ्क्यम् । अन्तकरणस्याप्युपादानापेक्षणादुपादानाकाङ्क्षाशान्त्यभावात् । तदेवमविद्यानिमित्तस्योपादानस्य वा अनिरूपणादशुद्धमिदं प्रक्रियारचनमिति ॥

तदेतत्केवलमविद्यावष्टम्भात् — यथा ह्यविद्या प्रपञ्चस्य निमित्तमुपादानं वा भवतीति नाभ्युपगम्यते पारमार्थिकसत्त्वाभावात्तस्याः, एवं सा स्वान्यन्निमित्तमुपादानं वा कारणं स्वोत्पत्तावपेक्षत इत्यपि नाभ्युपगम्यते, उक्तहेतोरेव । न हि सत्कार्यवादिनां वेदान्तिनां मते असत्कार्यस्यासत्कारणाद्वा जन्माङ्गीक्रियते, सत[1] एव तु मायया रूपान्तरेण विवर्त इति स्वीकारात् । तस्मान्नास्ति तावदनवबोधस्य निमित्तान्तरापेक्षणम्, येन भावाविद्यादिपिशाचिकासमुत्थान स्यात् ॥

१. सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥　　—का०

सतो हि विद्यमानात्कारणान्मायानिर्मितस्य हस्त्यादिकार्यस्येव जगज्जन्म युज्यते नासतः कारणात् न तु तत्त्वत एवात्मनो जन्म युज्यते । अथवा- सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पादिवन्मायया जन्म युज्यते न तु तत्त्वतः ॥　　—का० भा०

यत्पुनरुच्यते -- अनवबोधस्यासद्रूपस्य मिथ्याबोधनिमित्तत्वाङ्गीकारेऽसत. सज्जन्माभ्युपगत स्यादिति । तदपि न सम्यक् । तथा हि -- अनवबोधो यद्यसन् किं मिथ्याबोधः सन्निष्यते येनासतः सज्जन्म पर्यनुयुज्येत । न चावबोध निष्कास्य भावरूपाज्ञानाह्वानेऽपि दोषान्निस्तारं पश्याम । यत्कारण भावाज्ञानमप्यसदेव, ज्ञाननिवर्त्यत्वात् । न हि भवति वस्तुसदथ च ज्ञाननिवर्त्यमिति । तस्मादात्मस्वरूपनिर्धारणाभावमात्रनिमित्तत्वान्मिथ्याज्ञानसंशयज्ञानयोरय व्यवहारः आत्मानवबोध[६] एव कारणं तयोरिति । यस्मिन् हि विषये सशयो मिथ्याज्ञानं वा जायते तद्बाधेऽपि संशयान्तरस्य मिथ्याज्ञानान्तरस्य वा समुपजनने न विद्यते बाधकम् । ज्ञानेन तु तद्विषयकाज्ञाने परिहृते तयोरप्यपहारोऽवश्यंभावी । न चानवबोधमिथ्याबोधयोस्तात्त्विकः कश्चिदत्र निमित्तनैमित्तिकभावः प्रतिपिपादयिषित. शक्यप्रतिपादनो वा, निमित्तबुद्धेरेवाविद्याव्याप्तत्वादित्यवोचाम ॥

यस्य तु मते मिथ्याज्ञानस्य कारणं भावाविद्या, तदन्यदेव वा कारणं यत्किञ्चित्, तस्य तयो कार्यकारणयोः पूर्वापरीभावोऽभ्युपगतो भवति । तथा च मिथ्याज्ञानकारणस्य तत्पूर्वकालीनत्वमुररीक्रियते । तच्च न सम्भवि । मिथ्याज्ञानस्वरूपमेव हि कालादिबुद्धिः, तत्कथं मिथ्याज्ञानाभावेऽपि तत्पूर्वं कालादिसत्त्वमिति । तस्मान्नानवबोधमिथ्याबोधयोः कार्यकारणता, कि तर्ह्यविद्यास्वरूपतैवास्थेया । तदेवमविद्याया निमित्तोपादानाद्यपेक्षणाभावादनुपपन्न एवाय प्रश्न, इति सुस्थितम् ॥

६. अज्ञानं संशयत्वान्नो मिथ्याज्ञानात्तथैव च ।
तयोस्तत्त्वविवक्षायामज्ञानं तत्त्वमुच्यते ॥ —वा०

**१३२. अविद्या परमार्थतो नास्त्येव, ततोऽप्यनुपपन्नोऽयं प्रश्नः** : ननु च विद्यते चेदविद्या किं कारणं न सहते निमित्तप्रश्नम्? आत्मा खलु स्वच्छस्वरूप अङ्गीक्रियते । तत्कथमविद्या तस्मिन्निति प्रश्न· किमिति नोपपद्येत? अथ न विद्यत एवाविद्यानामकं वस्तु, तर्हि किमिदं वर्ण्यते यदविद्यानिमित्त· सर्वोऽयं प्रपञ्च इति? न ब्रूमो वय वास्तविकेन वृत्तेनाविद्या नाम काचिदस्तीति, किं तर्ह्यविद्या-तत्कार्याणां स्वरूपमात्मैव,[१] यस्य स्वरूपाधिगमे सति ते निश्शेष-मस्तंयन्तीति । यथा हि मध्याह्ने तपति प्रभाकरे कश्चिदतिमूढ पृच्छति किन्निमित्तोऽयमन्धकारः सूर्ये येन पेचकादयो न शक्नुवन्ति रूपग्रहणायेति । तमन्यः प्रतिबोधयति -- नास्त्येवात्र तम पेचकादि-कल्पितव्यतिरिक्तं इति । तद्वदेवेदमपीति विज्ञेयम् ॥

ननु च नित्यशुद्धचिदात्मानं सन्तमात्मानमात्मा कस्माद्वि-सस्मार येनासौ स्वस्मिन्नविद्यां पेचकादिरिव भानावन्धकारं कल्पयन् मोमुह्यति? क एवमाह जातुचिदात्मात्मान स्मरति विस्मरतीति[२] वा? इदानीमपि प्रश्नकाले चिदात्मैवायमिति खल्वुद्घुष्यतेऽस्माभिः । ननु कस्य तर्हि शास्त्रोपदेश· ? यः पृच्छति तस्येति विजानीहि । तस्य वा कथं प्रश्नः? उक्तप्रकारेण विस्मरणानर्हत्वादात्मन इति चेत् । कथय तर्हि कथं शरीरादिव्यतिरिक्तमात्मानमपि न जानीयुः परःशतं

१. अज्ञानमयमेवेदं सर्वमित्यपि भाषणम् ।
नैव भाषणमज्ञानाभावादेव शिवं विना ॥
तस्मादज्ञानमज्ञानकार्यं च सुरपुङ्गवाः ।
एतद्ब्रह्मैव नैवान्यदिति मे निश्चिता मति ॥ —सू० ब्र०

२. न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वाऽप्यलुप्तचित् । —उ०

प्राणिनो ये देहात्मवादे[1] निश्रिताः । मिथ्याज्ञानविजृम्भितमेतत्, तेषामपि वस्तुतो व्यतिरिक्तात्मस्वरूपत्वादिति चेत् । हन्त तर्हि मिथ्याज्ञानविजृम्भितमेवेदमपि यदात्मनि विस्मरणमस्मरणं स्मरण वास्तीति कल्पनम् । तस्मादनुपपन्न एवाविद्यमानाविद्याया निमित्तप्रश्नः ॥

अपि च कः खल्वेवं चोदयेत् कुत आत्मन्यविद्येति? न[2] तावदज्ञानी, तस्य स्वरूपानवबोधात्प्रश्नहेतोरसम्भवात् । नापि ज्ञानी, तस्य कालत्रयेऽप्यज्ञानं न स्पृशत्यात्मानमिति प्रतिपत्तेः । अतोऽपि न निमित्तप्रश्नस्यावकाशः ॥

१३३. **अविचार एव निमित्तमविद्यायाः**: तस्मादविद्या स्वनिमित्तप्रश्नं न सहते, अविद्याश्रयत्वान्निमित्तप्रश्नस्येति परमार्थः । व्यवहारदृष्ट्या तूच्यते निसर्ग एष जन्तूनां यद्विचारमकृत्वैव गतानुगतिकतया मिथ्याप्रत्ययेऽपि सत्यत्वाग्रहं कुर्वते । तस्मादात्मस्वरूपविवेकाभावनिमित्तैवेयमविद्येति[3] । न च स एव विवेकाभावः कथम्? अविचारनिमित्त इत्युक्तोत्तरत्वात् । सर्वत्र हि यावद्विचारं वस्तुस्वरूप न विविच्य ज्ञायत इति स्थितिः । तस्मादविचारनिमित्तैवाभावरूपाविद्या । मिथ्याज्ञानं तु तत एव विवेकाभावादित्यास्तां विस्तरः ॥

१. यत्तूक्तं सदात्मा सन्नात्मानं कथं न जानीयादिति । नासौ दोषः, कार्यकारणसंघातव्यतिरिक्तोऽहं जीवः कर्ता भोक्तेति स्वभावतः प्राणिनां विज्ञानादर्शनात् किमु तस्य सदात्मविज्ञानम् ॥ —छा० भा०

२, कुतोऽविद्येति चोद्यं स्यान्नैव प्राग्हेत्वसम्भवात् ।
कालत्रयपरिच्छित्तेर्नचोर्ध्वं चोद्यसम्भवः ॥ —नै०

३ क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादारोपितसर्परजतादिसंयोगवत् ॥ —गी० भा०

# अविद्यानिवृत्तिविचारः

१३४. **सम्यग्ज्ञानादविद्यानिवृत्तिः :** इदानीं प्राप्तावसरा निवृत्तिचिन्ता । मिथ्याज्ञानरूपत्वादविद्यायाः सम्यग्ज्ञानात्तन्निवृत्तिरित्यर्थादापतति । तच्चाविद्यापघातकं ज्ञानं 'वेद्यवेदित्रादि सर्वमपि मिथ्याध्यासनिबन्धनमेव, वस्तुवृत्तेन तु शुद्धचैतन्यमेकमेव सत्यम्' इति निर्धारणम् । उत्पद्यमानं च तादृशं ज्ञानं स्वान्यप्रपञ्चस्येव स्वमिथ्यात्वमप्यावेदयदेव जायत इति सर्वद्वैतमिथ्यात्वसिद्धिः ॥

१३५. **ज्ञानाभावस्याविद्यानिवर्त्यत्वे शङ्का :** अत्र कश्चिद्ब्रूयात्—नैतत्समञ्जसमविद्यानिवृत्तिवर्णनम् । यतो न केवलं मिथ्याज्ञानमविद्येत्यभ्युपगम्यते भवद्भिः, किं तु संशयज्ञानमप्यविद्यैव, तथा ज्ञानाभावोऽपि । तत्रापि संशयमिथ्याज्ञानयोर्ज्ञानाभावमात्रनिबन्धनत्वमभ्युपगम्यते । अतोऽन्ततो गत्वा ज्ञानाभाव एव मूलभूतमज्ञानम्, तन्निवृत्तिरेव च विद्याकार्यमिति वक्तव्यम् । तत्तु न घटमानम् । न हि नास्त्येव किमप्यज्ञानं नाम येनावृतो जन्तुर्मुह्यति संसारे इति युज्यते । असति हि स्वप्रकाशचैतन्यस्वरूपस्यास्य जीवस्य स्वरूपप्रच्छादके कस्मिंश्चिदावरणे निर्निमित्त एवायं संसारमोह इत्यापद्येत । तच्चायुक्तम् । तथा मोहरूपे विद्यानिवर्त्ये स्वरूपप्रकाशप्रतिबन्धेऽसति स्वरसत एव सर्वोऽपि जन्तुर्मुच्येत । तथा च वेदान्तविहिता विद्या निरर्थिका स्यात्, कृत्याभावात् । अतो दोषद्वयपरिहाराय विद्यानिवर्त्यं किञ्चित्स्वरूपावरणमवश्यमभ्युपेयं भवति । तथा वियदादिके जगति जाड्यं प्रसिद्धं तत्समानस्वभावां काञ्चित्प्रकृतिं विनैवोत्पन्नमिति न शक्यं सम्भावयितुम् । न च साङ्ख्याभिमतप्रधानादि-

रभ्युपगम्यते । अथात्मन्यध्यस्ता काचिज्जडप्रकृतिरिति स्वीक्रियते, ततो सैवात्मप्रकाशावरणं यस्य निवृत्तिर्भवति विद्ययेत्यवश्यमङ्गीकार्यं भवति । तदेव जगत्यनुगतं जाड्यं जीवगतं मौढ्यं च जाड्यमौढ्यात्मक किञ्चित्कारणमाकाङ्क्षमाणं सर्वानुभवसिद्धाज्ञानमेव तत्त्वेनाक्षिपतीत्यजडबोधरूपतिरस्कारसमर्थं भावरूपमेव किञ्चिद्विद्यानिवर्त्यमविद्याशब्दार्हमकामेनाप्यभ्युपेयमिति ॥

१३६. **विद्योत्पत्तिरेवाविद्यानिवृत्तिः** : तं प्रतिब्रूयात्— न तावदस्मद्दर्शने किञ्चिदसामञ्जस्यमस्ति । यत्तु त्वयाक्षिप्तम्, यदि ज्ञानाभाव एवाविद्या नास्ति तदा किमपि विद्यया निवर्त्यमिति । तत्तुच्छम् । यतो न वयं विद्योत्पत्तिव्यतिरेकेण काञ्चिदविद्यानिवृत्तिमभ्युपेमो यद्वयमाक्षेप. शोभेत । विद्याजनिरेव[1] हि तन्निवृत्ति' संसारनिवृत्तिश्चेत्यङ्गीक्रियते यत्पुनर्धाष्ट्यम्, जाड्यमौढ्यानुगमोपपत्तये तत्कारण भावाज्ञानं स्वीकार्यमिति । तदसकृदुक्तपरिहारम् । न तादृशमज्ञानं कस्यचित्कारणं कार्यं वा, मानाभावात् । न बा ज्ञाननिवर्त्यं ज्ञानिष्वपि जीवन्मुक्तेषु भवद्भिस्तदनुवृत्त्यभ्युपगमाच्चेति । अतो न किञ्चिदेतत् । तस्माद्विद्यया निवृत्तिरविद्याया इति व्यपदेशमात्रमेतत् । न पुनर्वास्तवी निवृत्ति., विद्योत्पत्तेरेव निवृत्तिशब्दाभिलप्यत्वात् । अत एवात्र कार्यकारणभावोऽपि नाशङ्कनीयः— विद्योत्पत्त्या पूर्वं भवितव्यं समनन्तरोत्तरं चाविद्यानिवृत्त्येति, प्रबोधस्वप्नबाधयोरिवैकस्यैव व्यवहारद्वयभाक्त्वात् । न चैवमावरणाभावात्ससारस्य निर्निमित्तत्वप्रसङ्ग., वास्तविकस्यावरणस्य संसारस्य तन्मोक्षस्य वानभ्युपगमादिति ध्येयम् ॥

१ न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकत ।
ससारनाशोऽविद्याया नाशान्नय व्यतिरिच्यते ॥ —वा०

१३७. **अविद्यानिवृत्तिर्नाम न भावविकारः :** एतेनेदमपि प्रत्युदस्तं भवति यदाहुर्भावाविद्यावादिनः केचित् – लोके तावद्घटादिनाशः क्षणिकभावविकार इति सर्वसम्मतम् । तथैव भवितुमर्हत्यविद्यानिवृत्तिरपि ब्रह्मज्ञानकार्यभूतेति । इत्थमत्र तैः प्रदर्श्यमानोपपत्तिः – यद्यविद्यानिवृत्तिर्ज्ञानोत्पत्तिसमनन्तरक्षणमात्रवर्तिनी काचिद्विकृतिर्न स्यात्, तर्हि तार्किकादिमत इव ध्वंसस्यानन्तत्वापत्तौ मोक्षेऽपि तत्सद्भावः प्रसज्येत । न च प्रागभावस्यानादेः प्रध्वंसाभावस्य चानन्तस्यानभ्युपगमे वस्तूत्पत्तिविनाशा दुर्निरूपाः स्युरिति भेतव्यम्, उत्पत्त्यादीनामनिर्वचनीयत्वस्याभीष्टत्वात् । एवमविद्यायास्तन्निवृत्तेश्चानिर्वचनीयत्वेन न कापि क्षतिः । नन्वविद्यानिवृत्तिर्यदि न चिरस्थायिनी तर्हि किं निबन्धना मुक्तिः स्थिरपुरुषार्थ इति वार्तेति चेत् । सेयं तव भ्रान्तिः । न ह्यस्माकमविद्यानिवृत्तिरेव मोक्षः, अपि त्वखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च । अथवा संसारदुःखनिवृत्तिरप्यविद्यानिवृत्तिसमानैवेति केवलाखण्डानन्दस्फुरणमेव मोक्ष इति ॥

तदिदं सकलं स्वमनीषिकासमुत्थमनुपपन्नमेव, अविद्याया भावाभावादिसर्वकल्पनाबीजभूताया वस्तुतो भावत्वे प्रमाणाभावात् । अधस्तादुक्तनीत्या विद्याजन्माविद्यानाशयोर्भेदाभावाच्च । भाष्यवार्तिकविरुद्धं चैतत्कल्पनम् । **'तस्मादविद्यानिवृत्तिमात्रे मोक्षव्यवहारः'** इति भगवत्पादैः, **'अविद्यास्तमयो मोक्षः'** इति च सुरेश्वराचार्यैश्च स्पष्टं समुदीरितत्वात् । **'ज्ञाते द्वैतं न विद्यते'** इत्याचार्यवचनाज्ज्ञानोत्तरं कालसद्भावे मानाभावाच्चासङ्गतमेव निवृत्तिर्नाम विक्रियेति ज्ञानोत्तरक्षणाश्रयेति च कल्पनम् । अपि चाविद्यानिवृत्तिर्नाम ब्रह्मस्वरूपमेव, ब्रह्मणो नित्यनिवृत्ताविद्यत्वात्, तत्र तत्र भगवत्पादैस्तथा भाषितत्वाच्च ।

अतोऽप्यविद्यानि ृत्तिर्घटादेर्मुसलप्रहारादिना निवृत्तिवद्भावविकार स्यादिति भ्रान्तेर्नावकाश । न हि विद्या[1] मुसलादिवत्कारकतामात्मन. सम्पाद्याविद्यां घटादिवद्भावरूपा नाशयतीति शक्यते वक्तुम् ॥

१३८. **ज्ञानं न कारकम्, अतोऽप्यविद्यानिवृत्तिर्न वास्तवी :** दृष्टवैषम्यप्रसङ्गाच्च । रज्जुस्वरूपविज्ञानव्यतिरेकेण कारकसाध्यस्य तदध्यस्तसर्पादिप्रविलयस्यादर्शनात् । यत्तु मूलाविद्यावादिनो दृष्टमप्यर्थमन्यथयन्तो वर्णयन्ति—रज्जुं न जानामीति प्रतीतिस्त्रेधा व्याख्यातव्या, ृत्त्यभावविषयत्वेनानिर्वचनीयमूलाविद्यासंसर्गविषयत्वेन रज्ज्वावरणविषयत्वेन वेति । तत्र प्रतीतेर्वृत्त्यभावविषयत्वे तावज्ज्ञानेन सर्वस्य प्रविलयमात्रं भवति नात्यन्तं बाध । मूलावरणसंसर्गविषयत्वे तु रज्जोरावरणस्य च साक्षिण्यध्यासात्तादृशसंसर्गोत्पत्ते., ज्ञानेनावरणसंसर्गनिवृत्ति क्रियते । यदि पुना रज्ज्वावरणविषया प्रतीतिरिति स्वीक्रियते, तदापि ज्ञानेन तदावरणमात्र निराक्रियते । सर्वेष्वप्येतेषु कल्पेषु नाविद्या रज्जुज्ञानेन निवर्त्यते, तस्या ब्रह्मज्ञानमात्रनिवर्त्यत्वात् । अथवा रज्जुसर्पस्तूलाविद्यानामकाविद्यान्तरोपादान एव स्वीक्रियते । अस्मिंस्तु पक्षे सर्वत्र तत्तज्ज्ञानेन तूलाविद्यैव निवर्त्यते न तु मूलाविद्येति । तदेतत्सर्वं भावाविद्यायाः सत्त्वे तस्याश्च मूलतूलरूपभेदवत्त्वे, चिदावरकत्त्वे, विषयैः सह साक्षिण्यध्यस्तत्वे, ब्रह्मविद्यानिवर्त्यत्वे वा मानाभावादभित्तिचित्रमेवेति न तत्खण्डनायादरः क्रियते । रज्ज्वादिस्वरूपविज्ञानमात्र तदध्यस्तसर्पादिनाश इति तु सर्वैरपि संविदनुसारिभिरङ्गीकृतमेवेति तत्सामान्यादात्मस्वरूपज्ञान-

१ अज्ञानध्वसि विज्ञानं न च कारकरूपताम् ।
गृहीत्वेह तमो हन्ति द्वैधीभावेऽसिवत्क्वचित् ॥ —वा०

मेव तदज्ञानस्य सकार्यस्य नाश इत्यवश्यमभ्युपगन्तव्यम् । न ह्यविद्यातन्निवृत्तिकृतोऽस्ति[1] कश्चिद्विशेष आत्मनि येनाविद्यावत्त्वं तदपगमश्च वास्तविकौ स्याताम् ॥

तस्मात्सर्वकल्पनामूलाया अविद्यायास्तन्निवृत्तेश्च वास्तविक्या अभावात्, निवृत्तिरनिर्वचनीयेति, विरोधिवृत्तिरूपेति, पञ्चमप्रकारेति, प्रध्वंसाभावरूपेति, भावविकाररूपेति च मुधैव विकल्प्यते वादिभिरिति ध्येयम् । व्यवहारदृष्टस्य चोदने परिहारे वा फलाभावात् । अथ मन्दबुद्धिव्युत्पादनार्था एते विकल्पाः । तदपि न चारु । न हि भेदवासनावासितधियो भेदप्रकारविशेषे चित्तस्थिरीकारेण बुद्धिर्व्युत्पाद्यते । अस्तु वेदं यथा तथा । वास्तविक तु भावाविद्यासद्भावं तन्निवर्तन चानिच्छद्भिर्न कोऽप्यस्माकं विवादः ॥

एतावदिह प्रकृतम् — यद्येकत्वमेव तत्त्वतो विशुद्धत्वं चात्मनस्तर्हि कथं तस्मिन्नविद्या तन्निवृत्तिश्चावकल्पेयातामिति नाशङ्कनीयमिति । यथा ह्यविद्या व्यावहारिकी[2] दृश्यते तथा तन्निवृत्तिरपीति न दृष्टस्य युक्त्यापलापो न्याय्यः । न च वस्तुसतीमविद्या तन्निवृत्तिं वा वेदान्तिनोऽभ्युपगच्छन्तीति ॥

## अविद्यास्वरूपादिचिन्तोपसंहारः

तदेवं वर्णिताविद्याया द्वैतिभिराशङ्क्यमानमनुपपत्तिसप्तकं न लब्धावकाशमिति सुस्पष्टम् । न हीयमविद्या भावाविद्येव वादि-

१ न चाविद्यावत्वे तदपगमे च कश्चिद्विशेषोऽस्ति ॥ —सू० भा०

२ दृश्यते ह्येकत्वविज्ञानादेवानवगमनिवृत्तिः । दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात् ॥ —बृ० भा०

व्यवहारदृशाविद्या तन्निवृत्तिश्च कथ्यते ।
तत्त्वदृष्ट्या तु नाविद्या तन्निवृत्तिश्च हे सुरा ॥ —सू० ब्र०

कल्पितानुभवमात्रसिद्धा प्रमाणापेक्षिणी वा अध्यासरूपिण्यास्तस्याः सर्वसिद्धत्वात्। तस्मान्नास्ति स्वरूपानुपपत्तिः ॥

चिदाभासरूपस्याश्रयस्य विषयस्य च साधितत्वादस्मिन् पक्षे मूलाविद्यायां प्रसञ्जिता अन्योन्याश्रयानवस्थित्यादयो दोषा न प्रादुःष्युः ॥

तिरोधानं चोपपद्यत आत्मनः, तात्त्विकस्य तस्यानभ्युपगमात्। कल्पितस्य च तस्य प्रतीत्यनुसारेण प्रतीतिकालेऽङ्गीकाराच्च न स्वप्रकाशविघातकत्वादिकलङ्कः ॥

निवृत्तिरपीदृश्या अविद्यायाः सुप्रतिपदा, कल्पितत्वादविद्यास्वरूपस्य, वास्तविकनिवृत्तेरनभ्युपगमाच्च। न च निवर्तकज्ञानस्यापि कल्पितत्त्वेन निवर्त्याज्ञानवदेव निवर्तकान्तरनिरीक्षणदार्ढ्यम्, निवर्तेरनात्ममिथ्यात्वनिश्चयस्वरूपत्वात्। एषा हि सर्वमिथ्यात्वमनीषा स्वस्या अपि मिथ्यात्वमवगमयन्त्येव समुन्मिषतीति न तस्या अप्यस्ति निवर्तकान्तरोदीक्षणम्। अपि च निवृत्तेर्वस्तुतो ब्रह्मस्वरूपत्वाच्च नोक्तशङ्कातङ्कः। व्यवहारतस्तूच्यते मिथ्यात्वनिश्चयो निवर्तकज्ञानमिति। तदेवं निवर्तकोपपत्तिरात्मानमासादयन्ती निवृत्त्युपपत्तिमपि प्रोद्बलयति ॥

एतेन यच्चोद्यते--समानाश्रयत्वमेव युक्तं बन्धमोक्षयोर्न व्याश्रयत्वम्। वेदितुश्च मोक्षसमयेऽभावाद्व्यधिकरणत्वं स्यात्तयोर्यदि वेदितृत्वनाश एव मोक्षः। न च वेद्यवेदितृनाशं विना सिद्धान्त्यभिमतो मोक्षः सेत्स्यति। किं च वेदितुः स्वनाशे प्रवृत्तिरेव नोपपद्यत इति निरस्ता मोक्षकथाप्रसक्तिरिति। तदपि प्रत्युक्तं भवति। वेदितुः स्वरूपस्य नाशानाभ्युपगमाद्वेदितृत्वस्यास्वरूपभूतस्यैव मिथ्यात्वनिश्चयो मोक्ष इत्यभ्युपगमाच्च ॥

उक्तरीत्या प्रातीतिकसत्त्वादविद्याया नेय शशविषाणादिवद-त्यन्तासती । नाप्यत्मवत्सती प्रतिपादितमिथ्यात्वात् । एकस्मिन्नेव वस्तुन्यत्यन्तासत्त्वं परमार्थसत्त्व च न सम्भवेता कदाचिदपि, विरोधात् । अतो नेय सदसती । तथा चास्या स्वकार्यसहिताया निरूपकैरनिर्वचनीयत्त्वं यदुपदिश्यते व्यवहारदृष्ट्या तदपि प्रकल्पते ॥

न च प्रमाणानुपपत्तिशङ्कातङ्क., प्रमाणापेक्षां सर्वत्र कर्तुमयुक्तमिति दर्शितत्वात्, प्रमाणप्रमेयादिव्यवहारस्यैवाविद्यामाश्रित्य प्रवृत्तत्वाच्च । तस्मान्नास्ति कुचोद्यावकाश इति सर्वमनवद्यम् ॥

इति श्रीमत्पूज्यपादशङ्करभगवच्चरणस्मरणपरिचयात्तवेदान्तप्रवेशेन
**सुब्रह्मण्येन विरचिते**
श्रीमति शङ्करहृदये मूलाविद्यानिरासे
स्वप्रक्रियानिरूपणं नाम
तृतीय खण्ड

—*—

# चतुर्थः खण्डः

(श्रुत्यादिप्रमाणोपन्यास )



## प्रमाणवाक्योपन्यासाय भूमिका

**१३९. श्रुत्याद्युपन्यासेन प्रयोजनम्ः** यद्यप्यनुभवाविरुद्ध-युक्त्यवष्टम्भेन प्रसाधितत्त्वादनतिशङ्कनीयं भवतीतःप्राक्तनेन ग्रन्थ-सन्दर्भेण प्रदर्शितमस्मदीय दर्शनम्। तथापि सर्वमिदं स्वकपोलकल्पित-मेव नाभियुक्तैः श्रुत्यादिभिर्वा कटाक्षेणापि वीक्षितमिति वाक्यशरणै कैश्चिदुपेक्ष्येत । तेषामपि विशङ्काव्याधि समाधातुमिदानी प्रयत्यते ॥

**१४०. द्वैतिशङ्कापरिहारे नात्रादरः:** अस्मिंस्तु खण्डे द्वैति-भिरागमवशेनाद्वैते शङ्कयमानस्य दोषजातस्य सर्वैरप्येकात्मवादिभिः परिहरणीयत्वान्न तदर्थमतीव प्रयत्यते । द्वैतस्य हि सर्वश्रुतिस्मृति-बहिर्भूतत्व प्रपञ्चितमेव पूर्वाचार्यै. । **'नेह नानास्ति किञ्चन' 'मायां तु प्रकृतिं विद्यात्' 'मृत्योः स मृत्युमाप्नोति' 'वाचा-रम्भणं विकारो नामधेयम्' 'उदरमन्तरं कुरुतेऽथ तस्य भयं भवति' 'द्वितीयाद्वै भयं भवति' 'न तु तद्द्वितीयमस्ति' 'यत्र हि द्वैतमिव भवति'**– इत्यादिश्रुतिभिः, **'तमश्वभ्रनिभम्' 'गुण-मयी मम माया' 'विभक्तमिय च स्थितम्' 'द्वैतिनोऽतथ्य-दर्शिनः' 'भेदोऽयं मिथ्याज्ञाननिबन्धन'**– इत्यादि स्मृतिभिश्च द्वैतसत्यत्वप्रतिषेधपूर्वकं तन्मिथ्यात्वोक्तेः, **'एकमेवाद्वितीयम्' 'ब्रह्मैवेदं**

**सर्वम्' 'इदं सर्वं यदयमात्मा' 'तत्सत्यम्' 'तत्त्वमसि' 'ब्रह्मविदाप्नोति परम्' 'अयमात्मा ब्रह्म' 'सर्वं खल्विदं ब्रह्म' 'सर्वमात्मानं पश्येत्' 'एको देवः' 'को मोहः कः शोकः' 'सर्वगुहाशयस्य' 'क्षेत्रज्ञं चापि मां विद्धि' 'वासुदेवः सर्वम्'**– इत्यादिभिर्वचनैरद्वितीयस्यात्मतत्त्वस्य तात्पर्येण प्रशसितत्त्वाच्च शास्त्रहृदयमद्वैतमेवेति स्फुटमवगम्यते ॥

न च तत्र तत्र द्वैतस्यापि जीवप्रपञ्चादिशब्दैर्व्यपदेशात्, सृष्टिवाक्यस्यान्यथानुपपत्ते· ब्रह्मोपासनाविधिवाक्याना दर्शनात्, कर्मकाण्डस्यान्यथाप्रामाण्याभावप्रसङ्गाच्च द्वैतमेव शास्त्रार्थ इति कुतो न स्यादिति शङ्क्यम् । यथाप्राप्तमेव द्वैतमनूद्यते शास्त्रे, न तु तात्पर्येण प्रतिपिपादयिषितं तत्, तात्पर्यलिङ्गाभावादिति वक्तु शक्यत्वात् । सृष्टिवर्णनस्थलेषु 'सत्या सृष्टि·' इत्यनुक्ते, सृष्टिज्ञाने फलाकीर्तनाच्च तत्र तात्पर्याभावस्य सुगमत्वात् । उपासनावाक्येषु च द्वैतसत्यत्वमविवक्षित्वैवोपासनाविधाने बाधकाभावादुपासनापरत्वं द्वैतसत्यत्वप्रतिपादनं चेत्युभयपरत्वे वाक्यभेदापत्तेः, साक्षाच्च '**नेदं यदिदमुपासते**' इति परमार्थदृष्ट्या ब्रह्मण्युपासनाशेषत्वस्य पर्युदासात्, आत्मोपदेशवाक्याना च निरवकाशाना सावकाशेभ्य उपासनावाक्येभ्यो बलीयस्त्वस्य श्लिष्टत्वात्, कर्मकाण्डस्याप्युपासनाकाण्डवत्स्वविधेयपरत्वात् द्वैतसत्यत्वपरत्वानुपपत्ते, कर्मचितफलस्य क्षयित्वेन तत्र तत्र श्रुतौ स्मृतौ च निन्दितत्वाच्च शास्त्रबहिष्कृतमेव द्वैतिदर्शनम् । इत्यादिक यदिह वक्तव्यं तदखिलं पूर्वैरेव गुरुभिर्जैमिनीयन्यायावष्टम्भेन वेदान्तान् व्याख्यातृभि· प्रतिष्ठाप्याद्वैतं परे निरुत्तराः कृता इति नास्त्यवसर· पुनर्द्वैत्याक्षेपपरीक्षणायेति विरम्यते ॥

ये पुनरद्वैत एव बद्धादराः प्रक्रियामस्मदुक्तां न प्रतियन्ति, न्यायाभासावष्टम्भेन प्रक्रियान्तरप्रस्थानमित्युपश्रुत्यापि श्रद्दधानतया तदुक्तविषयसमर्पकवाक्याभासानि वीक्ष्य स्यात् कदाचिन्नाद्रियन्ते न्याय्यमप्यस्मदुक्तं वेदान्तार्थमिति । तेषामुपसङ्ग्रहाय तदुदाहृतवाक्यानामन्यार्थत्वप्रदर्शनपुरस्सरं स्वपक्षस्य शास्त्रगुरुसम्प्रदायपरिशुद्धत्वमुदाहरिष्यते ॥

**१४१. अवस्थात्रयप्रक्रियायां श्रुतेः प्रामाण्यं कीदृशम्?** स्यादेतत् — अवस्थात्रयान्वयव्यतिरेकेणैव शुद्धात्मानं विनिश्चिन्वता भवतां किं नाम श्रुतिप्रामाण्यम्? तथा हि — श्रुतिस्तावत् प्रत्यक्षसमर्पितसामग्र्युपजीविनीति सुप्रसिद्धम् । न च स्वप्ने सुषुप्तौ वा प्रत्यक्षप्रवृत्तिरस्ति, जाग्रद्भूमावेव तस्य लब्धसत्ताकत्वात् । न चास्त्यनुमानादेर्जागरितादन्यत्र व्यापारः । अतः प्रमाणव्यवहारस्यैव जागरितावच्छिन्नत्वान्न कथञ्चन तस्य प्रवेशप्रत्याशा सम्भवत्यवस्थात्रयविचारणायामपि । तदेवं यस्य श्रुतिः प्रामाण्यमेव न भजते, कैव कथा तस्य सुषुप्ते तत्प्रामाण्यादज्ञाननिरसनव्यसनस्येति ॥

अत्र पृच्छामः — कः खल्वेवं वदेत्? अवस्थात्रयपरीक्षणेन शुद्धात्मानं सम्यगवगतवानाहो बुभुत्सुरिति । नाद्यः, प्रमाणादिव्यवहारस्य[1] ज्ञानादूर्ध्वमनभ्युपगमात् । न हि वेदान्तिनये ज्ञानिनः प्रमाणबलेनैकात्म्यनिश्चय इत्यङ्गीक्रियते, नित्यचैतन्यस्वरूप[2] आत्मा-

१ न ह्यात्मस्वरूपाविगमे सति पुनः प्रमाणप्रमेयव्यवहारः सम्भवति ॥
—सू० भा०

२ तेनात्मस्वरूपेणाजेन ज्ञानेनाजं ज्ञेयमात्मतत्त्वं स्वयमेव विबुध्यतेऽवगच्छति नित्यप्रकाशस्वरूप इव सविता ॥ —का० भा०

नपेक्ष्यैव प्रमाणमात्मनैवात्मानं वेत्तीत्यङ्गीकारात् । न चैकस्य कर्मकर्तृत्वप्रसङ्गः । अविषयस्य नित्याविकारिणः प्रकाशे कर्तृत्वाद्यपेक्षाभावात् । अथ बुभुत्सोरेव प्रश्न एष प्रमाणस्य सुषुप्तावप्यलब्धप्रसरत्वात्कथं सम्भवदुक्तिक श्रुतिप्रामाण्यमवस्थात्रयप्रक्रियायामिति । अत्रोच्यते -- न तावत्प्रमाणस्य प्रामाण्यमवस्थात्रयव्यापित्वकृतं किं तु बाधशङ्काकलङ्कशून्यविषयसमर्पणकृतम् । न च नास्त्यत्र विषयसमर्पणम् । न ह्यत्र श्रुतिज्ञापितेऽर्थे संशयविपरीतप्रत्ययौ जायेते । अनवबोधकत्व तु दूरापेतम्, ज्ञाप्यस्यात्मनो नित्यावबोधस्वरूपत्वात् । न च प्रमाणान्तरसाहाय्यमपेक्ष्यतेऽत्र[१] विषयनिश्चये । यथा हि 'नद्यास्तीरे फलानि सन्ती'ति वाक्यश्रवणानन्तरं प्रत्यक्षापेक्षा, तथात्रापि शुद्धात्मबोधकवाक्यश्रवणानन्तरमपि नापेक्षित मानान्तरगवेषणम् । प्रत्यक्षादिविषयवद्व्यवधानान्तरितत्वाभावादात्मनः ॥

यदप्याहु केचित् -- श्रुते प्रामाण्येऽभ्युपगम्यमाने नास्ति त्वदुक्तावस्थात्रयचिन्ताया अवसर. । अतोऽवस्थात्रयपरीक्षां विना नैव प्राणान् धारयितुं शक्नोषि चेत्, तर्हि त्यक्तव्या श्रुतिप्रामाण्यप्रत्याशेति । तदप्येतेन परिहृतम् । श्रुतेर्हि प्रामाण्य न श्रुतित्वेन, कथं तर्हि नित्यसिद्धात्मस्वरूपावबोधकत्वेनेति पूर्वमेव प्रोक्तम् । तस्माद्यः श्रुतिबोधिततत्त्वमस्यादिवाक्यज्ञानार्थं सकृच्छ्रवणमात्रेण शक्नोत्यपरोक्षयितुम्, त पुरुषधौरेयं प्रति नैवाद्रियामहेऽवस्थात्रयपरीक्षा कृत्यान्तरं वा । यथोक्तम्— **सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणत** ।

१. नात स्याद्भावनापेक्षा नापि मानान्तरं प्रति ।
अलौकिकत्वाद्बोधस्य सतश्चावगमात्मन. ॥
बोधे हि लौकिकेऽपेक्षा परतोऽवगतौ तथा । —तै० वा०

**असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम्** ॥ (उ०) इति । असत्त्वे ह्यन्यमानस्य– आत्मनोऽन्यस्य प्रमाणस्येत्यर्थ । उपलक्षणमिदं प्रमेयादेः । श्रुते प्रामाण्यमीदृशमेव खल्वभीष्टमद्वैतवादिनां यत्प्रमाणं-प्रमेयादिव्यवहारहीनमात्मानमावेदयित्वा स्वस्यापि प्रमाणत्वबाधन-मिति[1] । यस्तु सशयादिप्रतिबन्धवशान्न शक्नोत्यपरोक्षयितुं त प्रत्यात्म-स्वरूपविज्ञानर्थमिष्यते प्रक्रियाचिन्तेति सर्व निर्मलम् ॥

## सुषुप्तेरविद्यासंसर्गाभावे श्रुतिप्रामाण्यम्

**१४२. अविद्यावाक्यानां तद्विशेषरूपप्रतिपादने नास्ति व्यापार :** अत्र चोदयन्ति– **'अन्यद्युष्माकमन्तरं बभूव' 'नीहारेण प्रावृता' 'अनृतेन हि प्रत्यूढाः' 'तेषां सत्यानां सतामनृतमपिधानम्' 'त इमे सत्या. कामा अनृतापिधानाः' 'अनीशया शोचति मुह्यमानः' 'न तं विदाथ य इमा जजान' 'तथान्ये परिमुह्यमानाः'** इत्यादिभि. श्रुतिभि. प्राप्तज्ञानानां चेतनानामेवाज्ञत्वोक्तेर्नाध्यासरूपैवाविद्या, केवलान्त करणाश्रयत्वप्रसङ्गात् । **'सति सम्पद्य न विदुः सति संपाद्यमह इति'** इति सुप्तावन्तःकरणमुखमनवलोकयन्त्यामप्यविद्यासद्भावं श्रावयति । अत. श्रुतिप्रामाण्यान्मन्यामहे मिथ्याज्ञानादिव्यतिरिक्तमेव भावरूपं किञ्चिदस्त्यावरणमात्मनीति । स्मृतयश्च– **'तेन मुह्यन्ति जन्तवः' नीहारेण ह्र संवीत शिश्नोदरपरायणः । जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते** ॥ इति । अतोऽध्यासव्यतिरेकेण चिदाश्रिता काचिदविद्यास्तीत्यभ्युगन्तव्यम्, श्रुतिस्मृतिप्रामाण्यादिति ॥

१ शास्त्रं त्वन्त्य प्रमाणम् । प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्य प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे ॥ —गी० भा०

नैतत्सारम्, शब्दस्य यथाप्रसिद्धात्मविषयत्वात् कर्मविधायकवाक्यवत् । यथा हि विधिशास्त्रं कर्माणि विदधत्कर्मविधिविषयसंत्यत्वप्रतिपादनेऽपि व्याप्रियत इति नोपेयते, विधानेनैवोपक्षीणत्वात् । तद्वदत्राप्यज्ञानोपदेशकं वाक्यं ज्ञाननिवर्त्यसूचनेनैवोपक्षीणम्, तस्याज्ञानस्वरूपाश्रयविषयादिप्रतिपादनेऽपि व्यापारो नाङ्गीकार्य इति युक्तमुत्पश्याम । अन्यथा हि कर्मोपासनाविधिवाक्यैरेव द्वैतमपि प्रतिपादितं स्यादिति जितं द्वैतवादिभिरिति ॥

१४३. **सति सम्पद्येत्यादिवाक्यं नाविद्यायां प्रमाणम्, अतत्प्रकरणत्वात्:** ननूक्तमत्र विशेषनिर्धारणे कारणम् । यद्यप्यन्ययुष्माकमित्यादिवाक्यानामविद्यासामान्यबोधकत्वम्, तथाप्यन्त करणसंसर्गरहितायामप्यविद्यासद्भावं श्रावयति– **'सति सम्पद्य न विदुः'** इति । तेन मन्यामहे मिथ्याज्ञानादिव्यतिरिक्तमेव भवितुमर्हत्यज्ञानमितीति ॥

नैतद्युक्तम् । सति सम्पद्य न विदुरितीय श्रुतिर्नाविद्यासद्भावपरा, किं तु सदात्मनोरेकत्वोपपादनपरा । कथम्? उद्दालको हि श्वेतकेतुं पुत्रमेकत्वप्रतिपत्तये सुषुप्तौ सम्पत्तिमावेदयन् स्वपितिशब्दनिर्वचनेनैव स्वात्मन्यप्ययो गम्यत इति प्रस्तुय, शकुनिदृष्टान्तेन मनउपाधिकस्य जीवस्य सुप्तौ प्रमाणशब्दोपलक्षितब्रह्माश्रयत्वमुक्त्वा अशनायापिपासाशब्दयोर्निर्वचनेनापि सच्छब्दबोधितब्रह्ममूलत्वमेव गम्यतेऽस्योपाध्यात्मन इति निर्वाह्य, पुनरपि वागादिक्रमेण परस्यां देवतायां स्वरूपभूतायामेव सुषुप्तौ सम्पत्तिमब्रवीत् । श्वेतकेतु पुनर्यद्येवं सत्सम्पत्तिः सुषुप्तौ, कस्मादस्माभिस्तथा न विज्ञायत इत्याशङ्क्य प्रकारान्तरेण तस्यैवोपदिष्टार्थस्य विशेषेण ज्ञापनं प्रार्थया

मास । उद्दालकस्तु सदात्मप्रतिज्ञानाभावे हेतुरेकत्वमेव, नानात्वमेव हि विशेषविज्ञानहेतुरिति मधुरसदृष्टान्तोपन्यासेन तामाशङ्कां पर्यहार्षीत् । एवमेवोपरिष्टादपि जीवस्य विशुद्धात्मस्वरूपतायां तत्तदाशङ्कापनयनाय दृष्टान्तप्रणयनं करिष्यतीत्यात्मैक्यपरमेवेदं प्रकरणमिति निश्चीयते । तद्यदीदृशप्रकरणस्थमपि वाक्यं सुषुप्ताविद्यासद्भावपरत्वेन विव्रियेत ततो वाक्यभेद एव प्रसज्यते ॥

**१४४. सुषुप्तौ सत्सम्पत्तेः सम्पूर्णता नास्तीति शङ्का तत्परिहृतिश्च :** अत्राह -- सति सम्पद्येति वाक्यं न सदात्मनोरैक्यपरं भवितुमर्हति, **'स्वप्नान्तं मे सौम्य विजानीहि'** – इत्युपक्रमवाक्ये प्राप्तमेव सत्सम्पत्तिमनूद्य 'न विदु'रित्यविद्योपन्यासात् । इदमुक्तं भवति – यदा ह्ययं जीवो जागरितस्वप्नौ विहाय सुषुप्तिं गतो भवति तदा स्वात्मनि सद्रूपे सम्पन्नो भवति । यावता स्वस्मिन्नेवापीतो भवति तेन स्वपितीत्याचक्षत इति । यदि यस्मिन्नपीतस्तर्हि किं कारणं तथात्मानं न जानीत इत्याशङ्क्य सति सम्पद्य न विदुरित्यविद्याबोधकं वाक्यम् । सुषुप्तौ भावाविद्यासत्त्वान्न सम्पूर्णं लीन एव स्वात्मनि, कथं तर्हि, जागरितस्वप्नगतविशेषोपाध्यभिमानविगमाल्लीन इत्युपचर्यते । यथाह स्म भाष्यकृत् -- **'सुषुप्तावस्थायामुपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इव'** इति । तथा चात्यन्तिकविलयाभावाद्दृष्टान्त एवायम् । दार्ष्टान्तिकं चोत्तरत्र वक्ष्यति– **'एवमेवेहाचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये'** इति । तस्मादविद्याबोधकमेवेदं वाक्यमिति ॥

तदसत् । स्वं ह्यपीतो भवतीति स्वपितिशब्दप्रवृत्तिनिमित्तं समर्पयद्वाक्यं स्वाप्ययस्य कार्त्स्न्यत्वाकार्त्स्न्यत्वान्यतरविधायकमित्यत्र माना-

भावात् । भाष्यकारीयं च वचनमुदाहृतं भवदनिष्टप्रसङ्गकम् । कथम्? 'स्वात्मनि प्रलीन इव' इत्यौपाधिक एव लयो न तु पारमार्थिक इति हि सूचयति । तदभावाधिकरणभाष्यस्थं च वाक्यमत्रानुकूलतरम्– **'अपि च न कदाचिज्जीवस्य सत्सम्पत्तिर्नास्ति स्वरूपस्यानपायित्वात्। स्वप्नजागरितयोस्तूपाधिसम्पर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपरमात् सुषुप्ते स्वरूपापत्तिर्वक्ष्यते'** इति हि तत्र विस्पष्टमेवोक्तम् । अतः सिद्धं स्वभावसिद्धसद्रूपत्वमेव श्रुत्यात्र विशेषोपाधिविलयमपेक्ष्य सत्सम्पत्तिवाचोयुक्त्या बोध्यत इति । तस्मान्नाविद्यावादस्य मनागप्यत्रावकाश ॥

१४५. **न विदुरिति वेदनाभाववाचिना शब्देन न भावाविद्या बोध्यते:** इतश्च श्रुतावस्यां नास्ति भावाविद्याप्रत्याशा । सति सम्पद्य न विदुरिति हि वेदनाभावमात्रमत्र बोध्यते । तत्कथमसति वाक्यान्तरे भावाविद्यायामियं श्रुतिःप्रामाण्यमश्नुवीत? ननु वेदनाभावो गमयिष्यत्यविद्याम्, वेदनाभावे हि हेतुरविद्येति । न, वेदनाभावे हेतुरेकत्वमेवेति श्रुत्या सदृष्टान्तं बोधनात् । श्रुत्यन्तरसंवादाच्च । अविद्यास्वरूपनिर्धारणार्थं प्रवृत्ता हि बृहदारण्यकश्रुति र्जाग्रत्स्वप्नप्रविवेकेन कामकर्मविमुक्तत्वमुपपाद्य ततः सुषुप्तिमुपन्यस्य प्रियसम्परिष्वक्तस्त्रीदृष्टान्तेन प्राज्ञेनैकीभूतस्यात्मनो बाह्यान्तरवेदनाभावे तत्रैकत्वमेव[1] हेतुरित्याह । **'एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'** इति । उत्तरत्र च द्वितीयवस्त्वभावादेव वेदनाद्यभाव इति **'न तु तद्द्वितीयमस्ति ततोऽ-**

१. एकत्वमेव तेनात्र भेदादर्शनकारणम् ।
स्त्रीपुंदृष्टान्तवच्च स्यात्तदेतत्प्रतिपाद्यते ॥ —वा०

**न्यद्विभक्तं यत् पश्येत्'** इति वचनेन स्पष्टीकरोति । तस्मान्नाविद्यागमकमवेदनम् । न च लिङ्गान्तरं पश्यामः ॥

१४६. **श्रुत्यर्पितन्यग्रोधबीजदृष्टान्तादप्येवं गम्यते :** किञ्चान्यत्—यद्यपि प्रत्यस्तमितसर्वविशेषं सुषुप्तावात्मतत्त्वं विशेषविज्ञानेन नानुभवार्हम्, तथाप्यतीन्द्रियत्वादेव तस्य ज्ञानाभावो न तु विशेषस्येवानृतस्वरूपत्वात् । यस्मात्प्रकारान्तरेणाचार्योपदेशजनितज्ञानेन[1] साक्षात्कारार्हमेव भवतीति न्यग्रोधबीजजलविलीनलवणदृष्टान्तोपन्यासः, **'स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'** इति च श्रवणम्, इत्येतदुभयमपि सुषुप्त्यवस्थायां शुद्धात्मानं प्रतिजिग्राहयिषतः सङ्गच्छते न तु विपरीतवादिनः । प्रतिपक्षे ह्यविद्यावृतत्वेनैवात्मतत्त्वं सुषुप्तौ नानुभूयत इत्यवक्ष्यत् । न पुनः सूक्ष्मत्वादिति ॥

स्यान्मतम्--सम्पत्तिर्नाम न सर्वथैक्यं किं तु तादात्म्यमेव, तादात्म्यं च यत्किञ्चिद्भेदसहितोऽभेदः । जागरितस्वप्नयोरिव स्फुटतरविक्षेपो नास्तीत्येतावता हि स्वरूपसम्पत्तिवचनमिति । मैवम्, उक्तदृष्टान्तप्रणयनप्रयासस्य श्रुत्या सूक्ष्मत्वाख्यानस्य च वैयर्थ्यापातात् । **'स्वाप्ययसम्पत्त्योः'** इत्यादौ सम्पत्तिशब्दस्य कैवल्ये प्रयुक्तस्य निरुपचरिताभेदे वृत्तिर्नास्तीति वदितुमयुक्तत्वाच्च । अत एव सुषुप्तौ सत्सम्पत्तिर्दृष्टान्तार्थैव, नात्यन्तिकीत्येतदप्ययुक्तम् । उक्तरीत्या वाक्यविशेषस्य सिद्धान्त एवाञ्जस्यात् ॥

१. लवणाणिमवदिन्द्रियैरनुपलभ्यमानापि जगन्मूलं सदुपायान्तरेणोपलब्धुं शक्यते ॥ —छा० भा०

**१४७. सुषुप्तादुत्थानं श्रुत्या किमर्थं श्राव्यते?** कथं तर्हि सुषुप्तौ निरुपचरितसत्सम्पत्तौ सत्यां पुनः प्रबोधे यथापूर्वमाविद्यकस्वरूपप्राप्तिः श्राव्यमाणा सङ्गच्छत इति । उच्यते-- सदात्मता ज्ञात्वा सत्सम्पत्तिं गच्छतो मुक्तिः, न त्वज्ञात्वेति वक्तुं सुषुप्ते व्याघ्रादीनामात्मभावं जागरिते च स्वाज्ञानभावितस्वरूपप्राप्तिं[1] च श्रावयति । अस्यामेवोपनिषद्यष्टमाध्याये **'अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय'** इत्यादिना ज्ञानिनं[2] सम्प्रसादशब्देनानूद्य **'परं ज्योतिरुपसम्पद्यते'** इत्युक्तिरेवमेवार्थवती भवति । **'अहरहर्वा एवंवित्स्वर्गं लोकमेति'** इत्युपक्रम्य **'नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतँ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः'** । इति प्रत्यक्षवदभिवर्णनं सर्वमर्थवादतां नीतं स्यात्सुषुप्तिश्चेदविद्यायुता । तस्मान्नैतदपेक्षितव्यं सति सम्पद्येति वाक्यमविद्याप्रतिपादकमिति । तस्मादसदेवैतदुच्यते सुषुप्तावन्तःकरणरहितायामप्यवस्थायामविद्यासद्भावं श्रावयन्ती श्रुतिर्भावाविद्यायां प्रमाणम्, श्रुत्यन्तराणि च चेतनानामज्ञानश्रावकाणि तत्र मानमिति ॥

**१४८. कैवल्यश्रुतिवचनम्, तुरीयस्थानवर्णनम्, सुषुप्तिनिन्दावचनं च भावाविद्याप्रापकमिति शङ्का.** ननु चास्त्येव श्रुत्यन्तरं सौषुप्ताज्ञानप्रतिपादकम् । **'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुख-**

१ यस्माच्चैवमात्मनः सद्रूपमज्ञात्वैव सत्सम्पद्यन्ते । अतस्त इह लोके यत्कर्मनिमित्ता या या जातिः प्रपन्ना आसुर्व्याघ्रादीनाम् .....॥—छा० भा०

२. सुषुप्तिकाले स्वेनात्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति सम्प्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणः । तथाप्येवंवित्स्वर्गलोकमेतीति प्रकृतत्वात्, एष सम्प्रसाद इति सन्निहितवद्यत्नविशेषात्स . . ... ...॥ —छा० भा०

**रूपमेति**'। इति शुद्धात्मनश्च सुषुप्तव्यतिरिक्तस्थानवत्त्वबोधकानि वचनानि परःशतं विद्यन्ते । '**न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्**' इति प्राज्ञविषयप्रज्ञानघनत्वादिप्रतिषेधपूर्वकं तुरीयोपदेशः, '**एवमेवैष सम्प्रसादोऽस्माच्छरीरादुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते**' इति सम्प्रसादशब्दोदितसुषुप्तस्यापि कारणशरीरभूताया अविद्यायाः समुत्थानश्रवणम्, '**अत ऊर्ध्वं विमोक्षायैव ब्रूहि**' इति सुषुप्तोपन्यासात्परमपि प्राग्वदेव जनकस्य प्रश्नः, इत्यादिवचनानि सुषुप्तातिरिक्तं स्थान स्पष्टं प्रतिबोधयन्ति । अपि च सुषुप्तस्थानं लयलक्षणाविद्याविशिष्टमिति तत्र तत्र गर्हितं श्रुत्यन्तेषु '**स हाप्राप्यैव देवानेतद्भयं ददर्श, नाह खल्वयमेवँ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति**'। इन्द्र खलु सुषुप्तादन्यमात्मानं बुभुत्सु पुनरपि पञ्चवर्षाणि ब्रह्मचर्यमुवासेति श्रूयते । तत ऊर्ध्वमुत्तमपुरुषसञ्ज्ञितं प्रजापतिस्तुरीयमात्मानमस्मा उपदिदेशेति च । यत्सत्यं तत्र तत्र श्रुत्यन्तेषु सुषुप्तस्यापि क्वचिच्छुद्धरूपता बोध्यत इवेति । तथापि तद्वाक्यान्तरस्य निरवकाशस्य वैयर्थ्याय द्वैतग्रहणदृष्टान्तत्वेनैव कथञ्चिन्नेयम्। उक्तं हि भाष्यकारेण बृहदारण्यके-- **तच्चैतत्सर्वं विमोक्षपदार्थस्य दृष्टान्तभूतम्**'इति । तस्मात्सुषुप्तेऽविद्याबोधकवाक्यानां सत्त्वात्, सुषुप्तव्यतिरेकेणैव शुद्धात्मस्थितेः सुषुप्तिनिन्दापूर्वकमुपदेशात्, सुषुप्तब्रह्मवादिनीनां श्रुतीनामन्यार्थत्वसम्भवाच्च मन्यामहे नात्यन्तमविद्यादोषविनिर्मुक्तं सुषुप्तस्थानमिति । अतः कथं नागमिक सुषुप्ताविद्यावाद इति ॥

**१४९. सुषुप्तिकाले इत्यस्य वाक्यस्य तात्पर्यम्**: तदेतत्सर्वमसमीक्षिताभिधानम् । तथा हि— यत्तावदुच्यते '**सुषुप्तिकाले**' इत्या-

दिवाक्यमविद्याबोधकमिति । तदसत् । कथम्? **'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः ॥'** इति ज्ञानाभ्यासः प्रस्तुतः । अन्ते च– **'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥'** इत्यद्वितीयब्रह्मात्मज्ञानमेवोपसंहरिष्यते । तत्कथमिहैवाकस्मादन्तराले भावाज्ञानोपदेशः सङ्गच्छेत? अथ मन्यसे– यथा भूतार्थवादानां प्रधानपरत्वेऽपि स्वार्थपरता न दोषाय, तथेहापि सौषुप्तभावाविद्यासद्भावप्रत्यायने न कोऽपि दोषः । तमोऽभिभूतं स्वं विषयं द्वारतः प्रतिपादयत्प्रधानभूतज्ञानाभ्यासेऽपि वाक्यान्तरार्थे तात्पर्यवद्भविष्यतीदं वाक्यमित्यविरोध इति । तदपि मनोरथमात्रम् । प्रमाणान्तराविरोधेनैव ह्यवान्तरवाक्यार्थो विद्यमान इति कल्प्यते । अत्र तु विद्यमानवाद आश्रीयमाणे प्रधानभूत एवार्थो बाध्येत । यतः सुषुप्तावपि यदि विद्यमानता भावाविद्यायाः, तदा तन्निवृत्तिबोधकवाक्यान्तरस्याभावात्तात्पर्यतो विवक्षितं ब्रह्मात्मैकत्वमेव पीड्येतेति वृद्धिमिच्छतो मूलविनाशः ॥

अपि च सुषुप्तिकाले तमसाभिभवनमत्र विधीयत इति कथमध्यवसितो भवान्? न हि सुषुप्तिकाल एव जीवस्तमसाभिभूयते जागरिते तु शुद्ध एवेति मन्यन्ते भवदीयाः । ननु यद्यपि समानमविद्याभिभूतत्वमवस्थात्रयेऽपि । तथापि सुषुप्ते विक्षेपांशापहारेणावरणबीजरूपेणावशेषोऽस्ति विशेषः । तमःशब्देन चात्रावरणस्वरूपमेव विवक्षितम् **'सुषुप्तिकाले सकले विलीने'** इति विशेषणदर्शनात् । अतो मत्पक्षे सुतरामुपपद्यते विधानमिति । एतदपि न परिशुध्यति । 'सुषुप्तिकाल' इत्येतद्धि 'सकले विलीने' इत्यनेन सम्बध्यते, आन-

न्तर्यात् । न 'तमोभिभूत' इत्यनेन । तेन हि सम्बन्धे तमसाभिभूयते सुखरूपं चैतीत्युभयपरत्वं वाक्यस्य प्रसज्येत । न हीदं वाक्यमात्मनः सुषुप्तिकाले तमोभिभूतत्वं प्रतिपादयिष्यामीति प्रवृत्तम्, किं तर्हि, सर्वमलवर्जितं रूप दर्शयिष्यामि यथास्याद्वयब्रह्मस्वरूपता प्रतिपादिता स्यादिति । तदय वाक्यार्थ – योऽय तमोऽभिभूतो जीव. स स्वव्यतिरिक्ते सकलेऽपि विलीने सति सुषुप्तौ नानात्वस्याभावात्तदध्यासप्रयुक्त दु खं परित्यज्य नैज सुखरूपमेतीति ॥

१५०. **सौषुप्तसुखे विचारः** : अत्र मन्यन्ते केचित्– नास्ति किल सुषुप्ते सुखरूपत्वमात्मन', तत्राविद्यासंबलितत्वादात्मन', सुख स्वरूपत्वे मानाभावाच्च । न च सुखमहमन्वाप्समिति परामर्शस्तत्र मानत्व व्रजति । तत्र सुखमिति न विषयपरामर्श । सुखमिति विषयश्चेदभविष्यद्विशेषतस्तत्स्मरणमभविष्यत् । न त्वेतदस्ति । प्रत्युत न किञ्चिदपि चेतितं मयेति परामर्शोऽस्ति । न च सुप्तोत्थितस्य गात्रलाघवादिना लिङ्गेन तदनुमीयत इति साम्प्रतम् । यस्मादनुभूतश्चेत् स्मर्येत किं तत्र लिङ्गेन? गात्रगौरवादिरपि कदाचिद्भवति तेनायं न भवत्यनुमापकमित्यपि बोध्यम् । तस्मान्नास्ति सुखरूपतेत्यतो दु.खाभावे सुखत्वोपचार इति । अपरे तु मेनिरे– दुःखाभावो विद्यमानोऽपि न शक्यतेऽनुभवितुम् । तस्मान्नाय पक्ष. समीचीन. । कथं तर्हि सुखपरामर्शोपपत्तिरिति चेत् । किमत्र कथम्? सम्भवत्येव हि सुखानुभव. । यत्तूक्तं सुखमविद्यावृत नानुभवपदवीमारोढुमर्हतीति । तदयुक्तम्, साक्षिचैतन्यांशस्यानावृतत्वात् । ननु जागरिते तर्हि तस्यानवभासः किन्निबन्धन? न सर्वथानवभासस्तत्रापि । मिथ्याज्ञानविक्षिप्ततया तु न स्पष्टमवभासत इत्येतावान्विशेषः । अतो न

दुःखाभावोऽनुभूयते सुषुप्ते । नाप्ययं परामृश्यते सुप्तोत्थितेन । सुखमेवत्वनुभूत स्मर्यमाण स्वविरोधि दुःखाभावं गमयत्यर्थापत्त्या, यदि दुःखमभविष्यत् सुखानुभवो नाभविष्यदिति । ननु सुखानुभवस्य साक्षिचैतन्यस्याविनाशिन संस्काराभावे कथ तदनुस्मरण स्यात्? शृणु । अज्ञानगतचैतन्याभासजन्मोपाधित्वात्सुखानुभवस्य, अज्ञानस्य चावस्थाभेदेन चैतन्याभासानां भिन्नत्वात्तदप्यवकल्पते । एवं च चैतन्याभासजन्मनाशोपपत्तेरज्ञानविशिष्टाश्रयस्यात्मन सुखानुभव. सुषुप्ते तत्स्मरणं च जागरिते भवत इति ॥

तदेतन्मतद्वयमप्यसारम् । सुप्तोत्थितस्मरणबलेन सौषुप्तिकानुभवानुमानस्यायुक्तत्वात् । दर्शित चैतद्यथा तथा भावाज्ञानपरामर्शपराकरणावसरे । स्मरणस्य नियतमनुभवपूर्वत्वाभावात्, सुषुप्ते चानुभवविशेषस्यासम्भवादय स्मरणाभासो विकल्प एवेति । अभ्युपगम्यापि स्मरणत्व ब्रूम — सुखमस्वाप्समित्येव परामर्शो न तु सुखमन्वभूवमिति । अतोऽवगम्यते न सुखमिति विषय., किं तर्हि निद्राविघातकसामग्र्यभाव एवेति । ननु नायमभावोऽनुभूतचर., कथ स्यादय परामर्शविषय? न ब्रूमो वयमभावोऽनुस्मर्यत इति । कथ तर्हि यदि निद्राप्रतिबन्धकारणमभविष्यत् तर्हि नूनमभविष्यन्मध्ये मध्ये विशेषविज्ञानम् । यन्न किञ्चिदप्यचेतये, तद्गम्यते न जागरांबभूवाहं किं तु गाढ प्रसुप्त एवेति सुषुप्तविघातकसामग्र्यभावानुमानमेतदिति । ननु नायं जामाता कस्तर्हि दुहितु पतिरेवेत्युक्तिमनुहरत्ययं प्रलापः । न ह्यनुभूतचरो विशेषविज्ञानाभाव., स एव कुत अवसीयते यद्बलात्सुषुप्तिकारणसामग्र्यभाव उपपाद्येतेति चेत् । अहो तर्ककुशलता । सुषुप्तिरित्यवस्थामभ्यजानन्तो विशेषविज्ञानाभावे विप्र-

तिपद्यन्त इति। सर्वविधविज्ञानाभाव एव खलु सुषुप्तिरित्यभ्युपगम्यते, तस्मात्सुखमस्वाप्समिति क्रियाविशेषणमेवेति ज्ञेयम् ॥

१५१. **सुखरूपमेतीत्यस्यार्थः** कथं तर्हि सुखरूपमेतीति श्रुति·? न दु·खाभावो न च सुखानुभवोऽभ्युपगम्यते, नापि सुखशब्दार्हं सुषुप्ते वस्त्वन्तरं पश्याम· । बाढम् । अत एव सुखरूपमात्मन एवेति निश्चीयते । ननु कथ सुखरूपमेतीति सुखावाप्तिवचनम्, न हि स्वरूपमेवाप्यते । मैवम् । स्वाप्यवदुपपत्तेः । यथा खलु नित्यं स्वस्वरूप एव तिष्ठन्नामा जागरितादावुपाधिगतविशेषात्स्वरूपविभ्रष्ट इव, सुषुप्तौ पुनः सकलोपाधिविगमात् स्वरूपे विलीन इव च तदपेक्ष्यैव '**स्वं ह्यपीतो भवति**' इति श्रुतिः । एवमेव सदा सुखरूप एव सन् सुषुप्तौ विक्षेपकाभावात्सुखरूपमेतीत्युच्यते, ततो न विरोध· । न चैव शङ्कावादिमतादविशेष, तस्यापि साक्षिचैतन्यसुखस्य नित्यं वर्तमानस्यैव निद्रायामप्यङ्गीकारादिति वाच्यम् । तस्य निद्राया भावाज्ञानतद्गतचैतन्याभासप्रयुक्तसुखानुभवो जागरिते तत्परामर्शश्चेत्यभ्युपगम । अत्र तु तदुभयमपि नाङ्गीक्रियत इति विशेषात् । तदेवं तमोऽभिभूत सुखरूपमेतीति श्रुतिर्न सुषुप्ते तमस· सत्त्वमाचष्टे, किं तु नानात्वाध्यासकृतदु·खपरित्यागपूर्वकमात्मनः स्वस्वरूपेणावस्थानमिति[1] सिद्धम् ॥

१५२. **तुरीयावस्थायाः श्रुतिप्रतिपाद्यत्वाङ्गीकारेऽपि प्रतिवादिसम्मताविद्यासिद्धिर्नास्ति** : यत्पुनरुक्तं सुषुप्तावस्थादप्यात्मनो व्यतिरिक्तं स्थानान्तरगतं रूप प्रतिपाद्यते श्रुतिष्विति । अत्रोच्यते—

१· यदपि तस्यामवस्थाया सुखमुक्तं तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् ॥ —सू० भा०

यदि तुर्यावस्था जागरितादिव्यतिरिक्ता श्रुत्या प्रतिपाद्यते प्रतिपाद्यता नाम, किं तव तेन स्यात्? नन्विदमत्र स्यात्। सुषुप्तात्मा भावाविद्यावृत एव, तुरीयात्मा तु न तथेति। यथाहुः – '**नात्मानं न परांश्चैव न सत्यं नापि चानृतम्। प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक्सदा** ॥ इति ॥

अत्र पृच्छाम – यदि सुषुप्तादन्यत्तुरीयं स्थानं तर्हि वक्तुमर्हसि किं तुर्यानुभववान् कदापि जागर्त्याहोस्विन्नेति। यदि न जागर्ति तत्कथं तस्यानुभव विदन्तु जिज्ञासव, को वा स्यादुपदेशकस्तदवस्थास्वरूपस्येति? अथ जागर्ति, तत्र को हेतुर्जागरणे तुरीय स्थान परित्यज्येति वक्तव्यम्। न तत्र स्थाने भावाज्ञानसद्भाव. अनभ्युपगमात्। न च कारणान्तरं सम्भाव्यते। ननु तुरीयावस्थायामप्यस्ति तिरोहित कश्चिदज्ञानाश सूक्ष्मता गत.। स एवोत्थाने जगत्प्रतिभासहेतुर्भविष्यति। हन्त तर्ह्यायातं तौल्यमेव सुप्तितुर्ययोः, उभयोरप्यज्ञानसत्त्वात्, उभाभ्यामपि च सकाशादुत्थानसाम्यादिति ॥

ननु वैधर्म्यमप्यस्ति। सुप्त्यनुभवो सर्वप्रामाणभृत्साधारण, न तन्मात्राधिगमेनास्ति कस्यचित्ससारोपरम। तुरीयानुभववता तु निवृत्ताज्ञानकार्यत्वात् तेषामेच ब्रह्मज्ञानित्वमाञ्जसमिति। अहो विस्मरणशीलता। यदि निवृत्ताज्ञानस्यापि तुरीयादुत्थानं सम्भवति। किं प्रयोजनस्तर्हि सुप्तेरुत्थानमात्रलिङ्गात्सौषुप्ताज्ञानानुमानप्रयासः?

अथैतत्स्यात् – आशरीरपातमस्त्येप जगत्प्रतिभासनक्षममज्ञानं तुरीयामवस्थामनुभूतवतोऽपि। निर्दग्धस्थूलाज्ञानांशत्वादेव तु तस्य सुप्त्यनुभववद्भ्यो भेद इति। नैतदपि चारु. ब्रह्मज्ञानस्य मुख्यस्य

कस्यचिदपि जीवतोऽसम्भवप्रसङ्गात् । न चेष्टापत्तिरियं जीवन्मुक्तेर्गौणत्वाभ्युपगमादिति वाच्यम् । मुख्यमुक्तौ प्रमाणाभावात्, युगपदेकस्मिन् पुरुषे विद्याविद्ययोरवस्थित्यसम्भवस्य पूर्वं प्रदर्शितत्वात्, भावाज्ञाने स्थूलसूक्ष्मांशद्वयसत्त्वे प्रमाणाभावात्, अज्ञानांशवादस्याग्रे निरसिष्यमाणत्वाच्च । तदेव तुरीयावस्थाया श्रुतिप्रतिपाद्यत्वाभ्युपगमेऽपि न भावाविद्यावादिनां कञ्चन लाभं सम्भावयामः ॥

१५३. **अवस्थारूपस्य तुरीयस्य नैव श्रुतिप्रतिपाद्यता :** न च श्रुतिप्रतिपाद्यत्वमस्ति तुरीयस्थानस्य, माण्डूक्यश्रुतिस्तावन्न सुषुप्तिव्यतिरिक्तस्थानबोधनार्था, विश्वादीनामात्मनः पादत्रयत्वकथनेनैव तुरीयस्य व्यतिरिक्तत्वसिद्धे । कल्पितप्राज्ञत्वनिषेधेनात्मस्वरूपकथनार्थात्वेषा श्रुतिः । यथा हि 'रज्जुरेषा न सर्पः' इति वाक्ये सर्पप्रतिषेधस्तद्वदत्रापि न प्रज्ञानघनमित्यादि वाक्ये कल्पितप्राज्ञत्वप्रतिषेध ॥

नन्वेवं प्राज्ञवत्तैजसविश्वयोरपि कल्पितत्वाविशेषः । बाढम् । तत्तु सुषुप्तौ निष्प्रपञ्चत्वदर्शनादेवावसेयम् । ननु सर्वदा निष्प्रपञ्च एवात्मा? सत्यम् । न तु तत्पराग्दृशां जागरिताद्यवस्थाभिमानवतां शक्यावधारणं प्रातीतिकप्रपञ्चस्याभावो यत्र दर्शनक्षमस्तां सुषुप्तिमनुपन्यस्य[1] । यत्सत्यं सर्वदापि निष्प्रपञ्चस्वभाव एवायमात्मेति । तथापि प्रमात्राद्यपेक्षमिथ्यादृष्टिदूषिताशयाः प्रतियन्ति जाग्रत्स्वप्नयोरेव चैतन्यमस्ति सुषुप्ते न किञ्चिदवेदिष्मेति सकलजनप्रसिद्धेरिति । सुषुप्तावेव

१ अविद्याकामकर्मभिः संसारहेतुभिः संयुक्त एव स्वप्न इति न स्वमपीतो भवति । 'अनन्वागतं पुण्येनानन्वागतं पापेन, तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' 'तद्वा अस्यैतदतिच्छन्दा' 'एष परम आनन्द'-इत्यादिश्रुतिभ्य । सुषुप्त एव स्व देवतारूपं जीवत्वविनिर्मुक्तं दर्शयिष्यामीत्याह ॥ —छा० भा०

केवलमस्यात्मनः क्रियाकारकफलात्मकजगत्संसर्गाभावः, प्रबोधे पुनर्वास्तविक एव सम्बन्ध इति च । तद्वैपरीत्येन[1] सुषुप्तेऽप्यलुप्तचैतन्यतां प्रबोधेऽपि निष्प्रपञ्चता च व्युत्पादयितुं श्रुत्या प्रतिज्ञायते जागरिताद्यवस्थापरीक्षणम् । तत्र प्रपञ्चलेपाभावस्तावत्सुषुप्त्युपन्यासेनैव शक्योपपादनः । अतस्तन्मुखेन निष्प्रपञ्चतामवगमयित्वा प्राक्कल्पितां जागरिताद्यवस्थावत्त्वमपि श्रुतिर्निषेधति नान्तःप्रज्ञमित्यादिनेति श्लिष्यते । '**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते**' इति निष्प्रपञ्चताया एवोपसंहाराच्चेय श्रुतिरेवंपरेति निश्चीयते । एवं छान्दोग्येऽपि— 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय' इति वाक्यं न सुषुप्तादन्यत् स्थानमाचष्टे । किं तर्हि नात्मा देहेन्द्रियमनोबुद्धिसङ्घात इति प्रतिपादयिष्यदशरीरता सुषुप्तौ प्रसिद्धामनूद्य[2] दर्शयत्यात्मनः स्वाभाविकमशरीरत्वम् । एवं श्रुत्युक्तं देहादिप्रविविक्तत्वज्ञानमेव शरीरात्समुत्थानं न त्ववस्थान्तरगमनम्[3] । अतो नात्रापि तुरीयावस्थाप्रत्याशास्ति ॥

१ अलुप्तदृष्टिरात्मायं यथोक्तः स्वप्नबोधयोः ।
प्राज्ञोऽपि च तथैवायं यद्वै तदिति वाक्यतः ॥
अतिकारकहेतुश्च यथात्मायं सुषुप्तिगः ।
कूटस्थदृष्टिमात्रत्वात्तथा स्वप्नप्रबोधयोः ॥　—वा०

२ अस्माच्छरीरादुत्थाय सुषुप्तौ यः सुरर्षभाः ।
परज्योतिस्वरूपं तं शिवं सम्पद्यते सुराः ॥
अभिनिष्पद्यते स्वेन रूपेणैव स्वभावतः ॥　—सू० त्र०

३. अशरीरस्वभावस्यात्मनस्तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकात्मभावः सशरीरत्वम् । तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्तिताविवेकज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः ॥　—छा० भा०

यत्पुनरुक्तं बृहदारण्यके 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति वाक्यान्निश्चीयते सुप्तौ नात्यन्तिकनिवृत्तिरस्त्यज्ञानस्येतीति । तदेतदनाकलितश्रुत्यभिप्रायेणाभ्यूहितम् । जागरित एव बन्धमोक्षादिव्यवहारप्रदर्शनार्थो हि परो वाक्यसन्दर्भो दृश्यते । जागरितं हि सकललौकिकशास्त्रीयव्यवहारास्पदम् । तस्मात्तत्रैवाविद्याकृतबन्धमोक्षव्यवहार । तत्प्रतिपादनाय ससारमोक्षपदार्थौ व्याख्यास्यन्ती श्रुति कथं सुषुप्तौभावाविद्यासत्त्वं न प्रत्याययितुं सुषुप्तातिरिक्तावस्थान्तरं वा ज्ञापयितु व्याप्रियेतेति ॥

यदप्युक्त सुषुप्तस्थानं श्रुत्या निन्द्यते 'नाहमत्र भोग्यं पश्यामि विनाशमेवापीतो भवति' इत्यादिवाक्यैरिति । तत्र वाक्यस्य लोकदृष्ट्यनुवादित्वात्तात्पर्याभावो बोध्य । विशेषविज्ञानाभावमेव खलु व्याचष्टे 'नाह[1]खल्वयम्' इत्यादिवाक्यम् । विनाशाप्ययवचनमप्युपाधिविलयकृतविशेषविज्ञानापहाराभिप्रायकम्[2] । अत एव च लोकदृष्टिसिद्ध ज्ञानाभावमपोह्य नित्याविलुप्तचैतन्यदृष्टे सुषुप्तेऽपि सद्भाव शास्त्रीयदृष्टिमाश्रित्योपदेष्टुं प्रजापतिराजिज्ञपदिन्द्रं 'वसापराणिपञ्चवर्षाणि ब्रह्मचर्यम्' इति । न च तत्तुरीयावस्थाबोधनार्थमिति साम्प्रतम् । तादृशावस्थाबोधकशब्दाभावादिति ध्येयम् । तदेव नास्ति श्रुतिप्रतिपाद्यत्व तुरीयावस्थाया इति स्थितम् ॥

**१५४. सुषुप्तात्मनः शुद्धत्वबोधकवाक्यान्यनन्यपराण्यपि सन्ति :** अपि च लिङ्गमात्रमेतत् सौषुप्ताविद्यासद्भावे यत्सुषुप्तातिरिक्त-

१. 'नाहखल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' इति सुषुप्तावस्थाया विशेषविज्ञानाभावमेव व्याचष्टे ॥ —सू० भा०

२. 'यत्त तत्र विनाशमेवापीतो भवति' इति, तदपि विशेषविज्ञानविनाशाभिप्रायमेव ॥ —सू० भा०

स्थानाभिधान नाम श्रुते । तेन च श्रुतिः कल्प्या यया स्यादविद्यासद्भाव-बोध । विद्यन्ते तु नैका श्रुतय स्वरसत एव सुषुप्तात्मनो निरस्तसर्वाविद्यादिदोषत्वं बोधयन्त्यः । '**अत्र स्तेनोऽस्तेनो**[1] **भवति**' **अनन्वागतं पुण्येन**' '**एषोऽस्य परमो लोकः**' '**परंज्योतिरुपसम्पद्य**' '**सर्वस्याधिपतिः**' '**प्राज्ञेन सम्परिष्वक्तः**'– इत्यादीनि वचनानि साक्षादेव सकलदोषानागन्धितं शुद्ध सुषुप्तात्मानमवगमयन्ति सन्ति । तत्र युगपदविद्यासत्त्वमसत्त्वं च सुषुप्तौ श्रुत्यैव यदि बोध्येत तदा विरुद्धार्थाभिधानं शास्त्र कल्पितं स्यात् । तच्च न युक्तम् । दार्शता चाविद्यालिङ्गानां गतिः ॥

ननु '**जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते**' इति कैवल्योपनिषद्यादिपदेन तुरीयावस्थाभिहिता । सुबालोपनिषदि '**योऽयं विज्ञानघन उत्क्रामन् प्राणं वहति**' इत्युपक्रम्य '**जागरितं स्वप्नं सुषुप्तं तुरीयं च**' इति शब्दत एवोपात्ता । '**जाग्रत्स्वप्नः सुषुप्तिस्तुरीयमिति चतुर्विधावस्था**' इति च शारीरकोपनिषदि स्पष्टमेवावस्थाचातुर्विध्यमुक्तम् । तदेतत्सर्वं किमिति प्रद्विष्यते? न च सुषुप्त्यादेरवैलक्षण्यात्तेष्वेव स्थानेष्वन्तर्भाव इति वाच्यम् । श्रुतिसिद्धत्वे सत्यवस्थान्तरस्य तदनुरोधेन तुरीयव्यावृत्तसुषुप्त्यादिलक्षणस्य सुषुप्त्यादिव्यावृत्तावस्थान्तरलक्षणस्य चावश्य कल्पनीयत्वात् प्रमाणसिद्धस्य लक्षणेन निवर्तनायोगाच्चेति चेत् । अत्रोच्यते-- सुषुप्त्यादीत्यादिपदेन तुरीयावस्थाभिहितेति न केनचिदूहितुं शक्यते तस्य तत्राप्रकृतत्वात् । '**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च तद्भवेत्**' इत्यादि वाक्यशेषबलेन व्यवस्थावादस्यैवात्र स्वीकरणमिति स्पष्टं विज्ञायमान-

१. अत्र स्तेनेति शुद्धत्वं तथानन्वागतं श्रुते ॥ —उ॰

त्वाच्च । सुबालोपनिषद्युपनिषदन्तरे च यद्यप्यवस्थात्वमुक्तं तुरीयस्य तथाप्यतत्परत्वात्कथञ्चिन्नेयं वाक्यम् । अन्यथा सर्वोपनिषत्सिद्धान्तस्य निरवस्थात्मवादस्यासिद्धिप्रसङ्गात् । श्रुत्युक्तित एव श्रुतिप्रामाण्ये स्वीक्रियमाणेऽल्लोपनिषदादीनामपि प्रामाण्यादल्लादिसिद्धिरपि स्यादिति ध्येयम् । तस्मान्नास्ति तुरीयावस्थासिद्धि' श्रुतिप्रमाणेन । तत्सिद्धि-सद्भावेऽपि सुषुप्तग्रविद्यासद्भावो न सिध्यति, अधस्तादुदाहृतन्याया-नुग्रहीतश्रुतिभ्य इत्यपि न प्रस्मर्तव्यम् ॥

एतेन द्वैताग्रहणदृष्टान्तार्थानि सुषुप्तिवाक्यानीति निरस्तम् । स्वरसतः शुद्धस्वरूपात्मानं प्रतिबोधयतामग्रहणमात्रपरत्वेन सङ्कोचे कारणाभावात् । यत्तु भगवत्पादीयं वचनमुदाहृतम् – '**तच्चैतत्सर्वं विमोक्षपदार्थस्य दृष्टान्तभूतमिति**' । तज्जागरित एवाविद्याकृतबन्ध-मोक्षव्यवहारं दर्शयितुमित्यदोषः । एतदुक्तं भवति – सुषुप्तावस्थाया यथा स्वाभाविकेन वृत्तेन निष्प्रपञ्चो निरविद्यश्चात्मा तथा तज्ज्ञानेन विध्वस्ताविद्योऽपि जागरिते निष्प्रपञ्चो निरविद्य इति व्यवह्रियते । विद्यावस्थैव च मोक्षावस्थेति । यथोक्तं शारीरकभाष्ये – '**अविद्या-प्रत्युपस्थापितद्वैतसम्पृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति । स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकारणसङ्घातोऽकर्ता सुखी भवति सम्प्रसादावस्था-याम् । तथा मुक्तावस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूया-त्मैव केवलो निर्वृतः सुखी भवति**' इति ॥

तदेवं सुषुप्तग्रविद्यावाक्यानामाभासितत्वात्, अविद्यामात्रबोधक-वाक्यानां भावाविद्याविषयत्वे प्रमणाभावात्, सुषुप्तग्रतिरिक्तशुद्धा-वस्थायाः श्रुतिष्वप्रतिपादनात्, क्वचित्प्रतिपादनेऽपि सुषुप्तितुरीययो-

समानयोगक्षेमत्वस्यानिवारणीयत्वात्, साक्षादेव बह्वीभि श्रुतिभि सुषुप्तात्मनः शुद्धत्वाम्नानाच्च व्याविद्धाविद्यास्थितिरेव गाढनिद्रा. श्रुतिप्रमाणानुसारिण्येव भावाविद्यानिरसनप्रक्रियेति च सिद्धम् ॥

## सुषुप्तात्मनो निरविद्यत्वे सूत्राकारादिसम्मतिः

१५५. **सूत्रकारादिवचनविचारार्थं पूर्वः पक्षः** : अत्र विशङ्का भवति -- यद्येव श्रुतिसिद्धा सुषुप्तौ सर्वकल्मषविनिर्मुक्तिरात्मनः । कस्मात्तर्हि सूत्रकारस्तत्र तत्र सुषुप्तात्मन परमात्मनोऽन्यत्व सुषुप्तावव्यक्तोपाधित्वं चोचिवान्? '**सुषुप्त्युत्क्रान्त्योर्भेदेन**' '**तदभावो नाडीषु तच्छ्रुतेरात्मनि च**' '**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्**' इति । भाष्यकारश्च-- '**सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्**' '**इह तु विद्यते विवेककारणं कर्म चाविद्या च**' इति '**स एवायमुपाधिः स्वापप्रबोधयोर्बीजङ्कुरन्यायेन**' इति तत्रैव । **यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात्पूर्ववत्पुनः प्रबोधे विभागो भवति**' इति च वदन्नज्ञानसत्त्ववादमेवोपोद्बलयल्लँक्ष्यते । नैष्कर्म्यसिद्धौ वार्तिककारश्च -- '**यदि हि सुषुप्तेऽज्ञानं नाभविष्यत्**' इत्यादिना भावाविद्यासद्भाव कण्ठरवेण साधयामास । माण्डूक्यकारिकाया च करतलामलकितसकलागमार्थतत्त्वेनापि सम्प्रदायविदा भगवता श्रीगौडपादाचार्येण '**प्राज्ञः कारणबद्धस्तु**' इत्यादिना सुषुप्तेऽज्ञानसत्त्वमुक्त्वा तद्व्यतिरेकेण तुर्यात्मन. सर्वदृक्त्वमभिहितम् । तस्मादभियुक्तोक्तिविरुद्धमिव सुषुप्ताविद्यानिरसनं भातीति ॥

१५६. **सूत्रकृदाशयः** : अत्राभिधीयते– सूत्रकारस्तावत् '**सुषुप्त्युत्क्रान्त्योर्भेदेन**' इत्युक्तस्थानयोर्जीवस्वरूपव्यतिरेकेण परमात्मनः श्रुत्या व्यपदेशाद्या श्रुतिरवस्थापरा लक्ष्यते, सा वस्तुतो निरवस्थब्रह्मात्मनिर्देशपरैवेत्याह । न हि सुषुप्तावस्थायामविद्यामङ्गीकृत्येद जीवस्वरूपव्यतिरेकेण परमात्मव्यपदेशकथनम्, किं तु सुषुप्तादावप्यविद्यारहितमससारिस्वरूपमङ्गीकृत्य । '**अत ऊर्ध्वं विमोक्षायैव ब्रूहि**' इति प्रश्नात् '**अनन्वागतं पुण्येन**' इत्यादि प्रतिवचनाच्च विषयवाक्ये ॥

'**तदभावो नाडीषु**' इत्यादिना च परमात्मैव सुप्तिस्थानमित्युच्यते । न चात्र नाडीष्वात्मनि चेति समुच्चय. । नाडीपुरीतदाश्रयणद्वारा ब्रह्मसम्पद्यत इत्यभिप्रायात् । लोकसिद्धमेव पुरीतदाश्रयणमनूद्य ब्रह्मसम्पत्तेरेव प्रतिपाद्यमानत्वात् । न चात्मनीत्यधिकरणार्थता विवक्षिता '**स्वाप्ययात्**' इति तादात्म्यससूत्रणात् । समनन्तरमेव '**अत· प्रबोधोऽस्मात्**' इति वक्ष्यति । आत्मनः सुप्तिस्थानत्वात्तत एवोत्थानमुपदिश्यते सुषुप्तिप्रकरण इत्यर्थ । अत एव '**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि**' इति तुल्यवदुभयोरपि सुषुप्तिकैवल्ययोर्विशेषविज्ञाननिराकरणं सङ्गच्छते । सुषुप्ते नियमेन स्वरूप एवाप्यायात् द्वितीयाभावेन विशेषविज्ञानाभाव उपपद्यत इति । अत एव '**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः**' इति पूर्व पक्षः । '**स्थानविशेषात्प्रकाशादिवत्**' '**उपपत्तेश्च**' इति सिद्धान्तसूत्रे । यथैकस्य प्रकाशस्योपाधियोगादुपजातविशेषस्योपाध्युपशमात्सम्बन्धव्यपदेशः, एवमेव स्थानविशेषादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशम. स एव परमात्मना सम्बन्ध इति, एवमेव हि स्वमपीतो

भवतीति श्रुतिरुपपद्यते नान्यथेति च सिद्धान्तसूत्रयोरभिप्रायः । तदेवं स्वरूपावशेषता सुषुप्तौ ब्रुवाण सूत्रकार कथमविद्यावादिपक्षं कक्षीकुर्यात्?

पुंस्त्वादिवदिति सूत्र तु तद्गुणसारत्वाधिकारगतं न परमार्थाभिलापकं सूत्र प्रत्याख्यातु प्रभवति । एवं हि सूत्रक्रम.—'**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्**' '**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्**' इति । अयमर्थः—यावदज्ञानकल्पितं संसारित्वं भवति तावद्व्यक्ताव्यक्तान्यतररूपमास्थाय तिष्ठतीव बुद्ध्युपाधिरिति । तत्सिद्ध सूत्रकार. क्वचिदपि सुषुप्तावविद्या नानुजानातीति ॥

## भाष्यकारसम्मतिः

**१५७. पूर्वपक्षोपन्यस्तानां सौषुप्ताविद्याभाष्यवाक्याभासानां तात्पर्यम्**: भाष्यकारोऽपि खलूक्तसूत्राण्येवमेव व्याचख्याविति न तिरोहितम् । यत्तूदाह्रियते वचनम्—'**अविद्यात्मकबीजसद्भावकारितमुत्थानम्**' इति । न तेन परमार्थतोऽपि सुषुप्तौ सत्त्वं बीजस्यानुमतमिति शक्यं प्रतिपत्तुम् । यावदविद्यात्मकं बीजं ज्ञानेनादग्धं तावदस्वाप्स्यं प्रबुद्धवांश्चेति प्रतिपद्यते जीव । तस्माज्जागरितायोत्थानं नाम मिथ्याज्ञानहेतुकमिति हि निगदत्याचार्यः । यदाह छान्दोग्यभाष्ये—'**यस्माच्चैवमात्मनः सद्रूपमज्ञात्वैव सत् सम्पद्यन्ते, अतस्त इह लोके यत्कर्मनिमित्तां यां यां जाति प्रपन्ना आसु-व्याघ्रादीनां व्याघ्रोऽहं सिंहोऽहमित्येवम्, ते तत्कर्मज्ञानवासनाङ्किताः सन्त. सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति**' इति । न ह्यत्र सुषुप्ताज्ञाननिमित्तमेव सुषुप्तात्पुनरुत्थानमिति व्याख्यातु शक्यते ।

'अज्ञात्वैव सम्पद्यन्ते' इति पूर्वकालवाचिक्त्वाप्रत्ययप्रयोगासङ्गतेः । न च प्राकृतानां सुषुप्तेऽज्ञानम्, विदुषा पुनर्नास्तीति कल्पयितुं शक्यम्, सुषुप्तेरेकरूपत्वात् । **'समानं हि सर्वप्राणिनां पर्यायेण जाग्रत्स्वप्नसुषुप्तिगमनम्'** इति प्रश्नोपनिषद्भाष्यात् । **'सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते'** इत्यासृत्युपक्रमाधिकरणभाष्योक्तेश्च । तदेवमविद्यात्मकबीजसद्भावकारितमुत्थानमित्यविद्यानिमित्त एव जाग्रादाद्यभिमान इत्यर्थः । तत्रोक्तार्थ विशस्य किं कारणमविद्याया सुषुप्तिसंक्रमणमनुक्तमपि प्रक्रियताम्? ॥

एतेन **'इह तु विद्यते विवेककारणं कर्म चाविद्या च'** इति व्याख्यातम् । न हि कर्म सुषुप्तेऽस्तीति व्याख्यानं सम्भवतीति । **'स एवायमुपाधिः स्वापप्रबोधयोः'** इत्यत्रापि खल्वविद्ययात्मोपाधित्वेन गृहीताया बुद्धेः सम्बन्धो यावदज्ञाननाशमनुवर्तत इत्येव व्याचक्षीत । **'अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसम्बन्धः'** इत्यन्यत्र वचनात् । तस्मात् **'यदा मनो दार्वग्निवदविशेषविज्ञानरूपेण शरीरं व्याप्य तिष्ठते तदा सुषुप्तो भवति'** (प्र०) **'सुषुप्तप्रलयवद्बीजभावावशेषैवैषा सत्सम्पत्तिः'** इत्येवमादीनि बीजसद्भाववादीनि न सुषुप्ते प्रलये वा बीजाविद्यां प्रापयन्ति, किं तु मिथ्याज्ञानवतां सत्सम्पत्तावपि विपरीतबुद्धिरनुवर्तत एवेति विद्यावश्यकतां बोधयन्ति, **'मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति' 'अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः'** इत्यादिवचनसान्निध्यबलादित्यवगन्तव्यम् ॥

१५८. **सुषुप्तिसमाधिवाक्यं नाविद्यावगमकम्, किन्तु तत्प्रतिषेधकम्:** '**यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ** इति वचनं तु सुषुप्ताविद्यावादिनोऽत्यन्तविपरीतप्रयोजनम् । अविभागप्राप्तिः सुषुप्तौ स्वाभाविक्येव, न पुनरविद्यालेशोऽप्यत्रास्तीति हि भगवतः प्रतिपादनरीतिर्लक्ष्यते । यतः समनन्तरमेव ब्रवीति '**मिथ्याज्ञानस्यानपोदितत्वात्पूर्ववत्पुनः प्रबोधे विभागः**' इति । ननु सुषुप्तौ यथा विद्यते मिथ्याभूतमज्ञानं जागरितविभागकारणम्, एवं प्रलयेऽपि स्थितिकालीनविभागकारणं मिथ्याज्ञानप्रतिबद्धा विभागशक्तिरनुमास्यते इत्येवं परात्र लक्ष्यते वचनव्यक्तिः । मैवम्, सुषुप्तेऽज्ञानं विद्यते इति वचनाभावात् । एवं हि दृष्टान्तदार्ष्टान्तिकयोरत्रर्ज्वी सङ्गतिः । सुषुप्तिसमाध्यादौ न विद्यते कश्चिद्विभागः, तेन न परमार्थो भवितुमर्हति सः । तथापि जागरिते विभागो दृश्यत एव, तत्कस्य हेतोः? मिथ्याज्ञानस्यानपोदितत्वात्, मिथ्याज्ञाननिमित्तत्वाद्विभागस्येत्यर्थः । यथैवं दृष्टान्ते नियमकारणाभावेऽपि मिथ्याज्ञानमात्राद्विभागः, एवमविभागेऽप्यपीतौ स्थितिकाले विभागो भविष्यतीति । वाक्यशेषश्चैवमेव समञ्जसः '**यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितौ दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते**' इति । अयमर्थः– परमात्मनि नास्ति कश्चिद्विभागः, अथ च मिथ्याज्ञानप्रतिबद्धः स्थितौ तस्मिन् विभागः सन्दृश्यते स्वप्नवत् । एवमपीतावपि नास्ति काचिद्विभागशक्तिः, अथ च मिथ्याज्ञानवद्भिरनुमास्यत एवेति । यावन्मिथ्याज्ञानमनुवर्तते तावत्तत्प्रयुक्तः स्थितौ विभागस्तत्प्रयुक्ता च प्रलये विभागशक्तिरित्यर्थः ।

'मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः', 'मिथ्याज्ञानप्रतिबद्धैव च विभागशक्तिरनुमास्यते' इति वचनसामर्थ्यादेवमवगम्यते ॥

ये त्वत्र 'स्वाभाविक्यामविभागप्राप्तौ' इति विभागस्य स्वाभाविकत्वमविद्यामात्रसमिश्रितत्त्वमिति व्याचख्युः । तेषां भाष्यकार-हृदयाप्रवेश एवापराध्यतीत्यदोष । बृहदारण्यके बालाक्यजातशत्रु-संवादे प्रकृतविषयविचारणाय प्रवृत्तो हि भाष्यकारः -- 'क्वैष तदा-भूदिति स्वभावविजिज्ञापयिषया प्रकरणम्' इति भूमिकां रच-यित्वा प्राह --'तस्मादकर्मप्रयुक्तत्वात् तथास्वाभाव्यमेवात्मनोऽ-वगम्यते । यस्मिन् स्वाभाव्येऽभूत्, यतश्च स्वाभाव्यात्प्रच्युतः संसारी स्वभावविलक्षण इत्येतद्विवक्षया पृच्छति' इति । अत्र खलु स्पष्टमेवेदं यत्स्वभावशब्दोऽत्र नाविद्याभिधायी, किंत्वात्मनो निरविद्यासंसारिस्वरूपवाचक इति ॥

किं च यथा हि सुषुप्तिसमाध्यादाविति यदि सुषुप्तावविद्या-सद्भावं साधयति, तर्हि समाधावपि तत् साध्नुयादेवेति सुषुप्त्यतिरिक्त-समाध्यवस्थापि स्यादविद्यासम्बद्धा । तच्चानिष्टं श्रीमतामित्यहो पराप-शकुनाय स्वनासाच्छेदनम्! तस्माद्भाष्यकारीयवचनानि प्रतिवाद्युप-न्यस्तान्यविद्यानिरासपराण्येव लक्ष्यन्त इत्यनवद्यम् ॥

१५९. सौषुप्ताविद्यानिवारकभाष्यवाक्यानामुदाहरणम्

सन्ति च भगवतो वाक्यान्तराणि निर्विचिकित्समविद्यानिवारकाणि तद्यथा दहराधिकरणे-- 'सम्प्रसादशब्दोदितो जीवो जागरितव्यवहारे देहे-न्द्रियपञ्जराध्यक्षोभूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनु-भूय श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय सुषुप्तावस्थायां परंज्योतिराकाशशब्दितं परंब्रह्मोपसम्पद्य विशेष-

विज्ञानवत्त्वं च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तम् । न चैवं मन्तव्यम्--उभयरूपादपीति विशेषणान्न कारणशरीरादस्ति प्रतिपादित समुत्थानमिति । सर्वविधस्याप्यभिमानस्यासम्भवात्सुषुप्तौ । विस्पष्टमेव च बृहदाण्यके 'न हि सुषुप्तिकाले शरीरसम्बन्धोऽस्ति' इत्युक्तत्वाच्च । तैत्तिरीयकभाष्ये चोक्तम्– सुषुप्तेऽग्रहणमन्यासक्तवदिति चेत् । न, सर्वाग्रहणात् । जाग्रत्स्वप्नयोरन्यस्य ग्रहणात् सत्त्वमेवेति चेत् । न, अविद्याकृतत्वाज्जाग्रत्स्वप्नयोः । यदन्यग्रहणं जाग्रत्स्वप्नयोस्तदविद्याकृतम्, अविद्याभावेऽभावात् । सुषुप्तेऽग्रहणमप्यविद्याकृतमिति चेत्, । न, स्वाभाविकत्वात्' इति । प्रश्नोपनिषद्भाष्ये च– 'एतस्मिन्कालेऽविद्याकामकर्मनिबन्धनानि कार्यकारणानि शान्तानि भवन्ति' इति । छान्दोग्यभाष्येऽपि– 'अविद्याकामकर्मभिः संसारहेतुभिः संयुक्त एव स्वप्न इति न स्वमपीतो भवति । सुषुप्त एव स्वं देवतारूपं जीवत्वविनिर्मुक्तं दर्शयिष्यामीत्याह' इति ॥

बृहदारण्यकभाष्ये पुनरविद्याप्रत्याख्यानं भूयो भूयः कृतमस्ति । 'यत्राविद्याकामकर्माणि न सन्ति' 'अभयं रूपमविद्यावर्जितमित्येतत्' 'अन्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावात्' 'अत्र चैतत्प्रकृतमविद्याकामकर्मविनिर्मुक्तमेव तद्रूपं यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत इति' । 'यद्धि तद्विशेषदर्शनकारणमन्तःकरणं चक्षू रूपं च तदविद्ययाऽन्यत्वेन प्रत्युपस्थापितमासीत् । तदेतस्मिन् काल एकीभूतम्, आत्मनः परेण परिष्वङ्गात्' 'यत्र पुनः साविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता' 'अविद्यया हि द्वितीयः प्रविभज्यते, सा च शान्तात्र' इति च ।

तदेवं पौनःपुन्येन सुषुप्ताविद्यानिराकरणं न कथञ्चनोपापत्स्यत यदि बीजरूपाविद्या तत्राभ्युपागंस्यत पूज्यपादैः ॥

१६०. **बृहदारण्यकस्थस्य सुषुप्त्यविद्यानिराकरणभाष्यस्यैदंपर्यम्ः** स्यादेतत् – नैतद्भावाविद्याया निरसनम्, किं तु मिथ्याज्ञानस्यैव । तथा हि– नाविद्या स्वयमनर्थकारिणी, सुषुप्तादौ तत्सत्त्वेऽप्यनर्थादर्शनात्, सुखाविर्भावदर्शनाच्च । तत्कार्यरूपेण परिणममानमेवाज्ञानं मिथ्याज्ञानशब्दव्यपदेश्यं सदनर्थं प्रसूते । तस्माद्बीजरूपेण सत्यप्यविद्या नास्तीत्युच्यतेऽनर्थप्रसवाभावात् । स्पष्टानुभवविषयत्वतदभावाभ्यां च जाग्रत्स्वप्नयोरविद्यासत्त्वोक्ति सुषुप्तौ तदभाववचनं च न विरुध्येते । सुषुप्तेह्यहङ्काराभावादविद्या न स्पष्टमनुभूयते, प्रबोधे तु स्वकार्यं निष्पाद्य 'इदमहं न जाने मूढ एवास्मि' इति स्पष्टानुभवविषयत्व गच्छतीत्येतावता क्वचिद्भाष्ये सुषुप्तिकालेऽविद्या नास्तीत्युक्तं विद्यमानमपि तदविद्यमानप्रायमिति कृत्वा । न पुनर्नास्त्येव परमार्थत इति, अन्यथा सुषुप्तिकैवल्ययोर्वैलक्षण्याभावप्रसङ्गात् । तस्माद्बीजरूपेण सविकल्पकानुभवाविषयत्वेनास्तित्वमेवाविद्याया भाष्यकाराभिप्रेतम् । सुषुप्तिदृष्टान्तश्चैतावतैव कैवल्यनिरूपणे प्रणीतो भाष्यकारेणेति ॥

तदसत्, 'अविद्याकामकर्मविनिर्मुक्तमेव तद्रूपं यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत'' इत्यवधारणविरोधात् । ननूक्त मिथ्याज्ञानमेवात्राविद्येति । अन्यथाक्षरशोऽनुसरणे सुषुप्तौ प्रत्यक्षत' कस्यचिदपि रूपस्याग्रहणात् 'गृह्यते प्रत्यक्षतः' इति न्यायासङ्गतमुक्तं स्यात् । अत 'प्रत्यक्षत' इति सुप्तोत्थितस्य तथा गृहीतत्त्वेन परामर्शादित्यर्थ । अतोऽविद्येत्यभिव्यक्तकार्याविद्यारूपस्यैवाभिधानमिति युक्त-

मुत्पश्यामइति चेत् । न, कारणाविद्यायाः क्वचिदप्यनुपात्तत्वात्पूज्य-पादैः । न हि क्वचिदध्यासरूपाविद्याव्यतिरेकेण तत्कारणभूत भावाविद्याख्य वस्तु प्रस्थानत्रयेऽपि भाष्यकारेणोपात्तम् । अतो न भावाविद्यापरिशेषोऽयं सुषुप्ते ॥

अत एव च भावाविद्याया सुषुप्तादन्यत्रानर्थकारित्ववचन स्पष्टानुभवगोचरत्ववचनं च भाष्यबहिर्भूतत्वेन व्याख्यात वेदितव्यम् । भावाविद्यायाः क्वचिदपि भाष्येऽङ्गीकृतत्वाभावेन तस्यानर्थकारित्वानुभवगोचरत्वादीनां षष्ठेन्द्रियविषयप्रभेदविचारवद्भाष्यग्रन्थेऽवकाशलाभशङ्काया अप्यनुदयात् । तस्मात्सर्वाविद्यानिषेध एवाय सुषुप्ते इत्यवगम्यते ॥

उपक्रमसामर्थ्याच्चैतदेव प्रतिपत्तव्यम् । सुषुप्त्युदाहरणकण्डिकाप्रारंभे हि भगवत्पादैरेवमुपक्रान्तम् — '**एकवाक्यतया तूपसंह्रियमाणं फलं नित्यमुक्तबुद्धशुद्धस्वभावताऽस्य नैकत्र पुञ्जीकृत्य प्रदर्शितेति तत्प्रदर्शनाय कण्डिकारभ्यते । सुषुप्ते ह्येवं रूपतास्य वक्ष्यमाणा**' इति । सोऽयमुपक्रमो बाध्येत यद्युपसंहारे निष्कारणमविद्याशब्दवृत्तिं संकुच्य कार्याविद्यानिराकरणपरमविद्यानिरासभाष्यं व्याख्यायेतेति । '**एवमयं स्वाभाविके स्व आत्मनि सर्वसंसारधर्मातीतो वर्तते स्वापकाले**' इति च वाक्यान्तरम् ॥

अपि च बालाक्यधिकरणे समस्ति वाक्यान्तरं भाष्यकृताम्-- '**सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति, परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा । तस्माद्यत्रास्य जीवस्य निस्सम्बोधस्वच्छतारूपः स्वाप उपाधिजनित विशेषविज्ञानरहितं स्वरूपम्, यतस्तद्भ्रंशरूपमागमनं सोऽत्र परमात्मा**

वेदितव्यतया श्रावित इति गम्यते' इति । तस्मात्स्फुटमेतद्भाष्यविरोधमनालक्ष्यैव स्वसम्प्रदाय नवीनमनुसृत्याचार्यदेशीयाः स्वापे जीवब्रह्मविभागं लयलक्षणाविद्या चाभ्युपजग्मुरिति । 'एकतां गच्छति' इति विभागनिषेधस्य च 'स्वच्छतारूप' इत्यविद्यानिषेधस्य च केनचिदपि निह्नोतुमशक्यत्वात् । यत्तु व्याख्यानम् -- स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूपो न तु स्वच्छतैव, लयविक्षेपसंस्कारयोर्भावात्, समुदाचरद्वृत्तिमद्विक्षेपाभावमात्रेणोपमानमिति । तन्न, श्रुतहान्यश्रुतकल्पनादोषात् । स्वच्छतारूपमिति यथाश्रुतग्रहणाभावे हि प्रकृतम् 'यस्य वैतत् कर्म' इत्यादिवाक्यं नैव ब्रह्मवाक्यं भवेत् । ततश्च प्रतिज्ञातार्थोपरोध इति । तदेवं सुषुप्तौ सर्वमलरहितत्वस्य कण्ठोक्तत्वादधस्तादुदाहृतवाक्येऽप्यविद्यासामान्यमेव निराकृतमिति निश्चीयते ॥

यत्पुनरुक्तम् 'गृह्यते प्रत्यक्षतः' इति न्यायासङ्गतमिति । तदपि न, स्वयसंवेद्यत्वपरत्वात्प्रत्यक्षशब्दस्य । लोके हि यद्व्यवहितं दृष्टेस्तत्परोक्षमित्युच्यते । तद्वैपरीत्येन पुनरिहात्मभूतमव्यवहितमविद्यारहितं रूपं गृह्यत इति स्वयंप्रकाशत्वमेवात्मनः प्रत्यक्षत्ववाचोयुक्त्योच्यते इति न दोषः । एतेन 'गृह्यत' इति कर्मकर्तृत्वानुपपत्त्या सुप्तोत्थितपरामर्शपरत्वेन व्याख्यातव्यमिति यदुक्तम्, तदपि परिहृतम् । तस्मादविद्यरहितमेव रूपं सुषुप्ते प्रत्यक्षतो गृह्यत इति सम्यगेव ॥

१६१. **भाष्यसम्मत्युपसंहारः** : प्रकरणेष्वपि भगवत्पादैस्तत्र तत्रोपदिष्ट एवाज्ञानाभावः सुषुप्ते । '**अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् । तद्गता दृश्यते यस्मात् सुषुप्ते न च गृह्यते**' ॥

इति (सम्यग्ज्ञतिप्रकरणे) । '**पूर्वोक्तं यत्तमोबीजं तन्नास्तीति विनिश्चयः**' इति च । अवगतिप्रकरणे च– '**एषा अविद्या यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः**' इति । दक्षिणामूर्त्यष्टके च-- '**स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित.**' इति । एवमेव प्रकरणान्तरेष्वपि । यत्र पुनर्वाक्याभासानि दृश्यन्ते विपरीताभिधायीति, तान्यपि सुषुप्तिकल्पनमज्ञाननिमित्तमित्येवंपरतयैव योजयितव्यानि पौर्वापर्यसमालोचनसमर्थैरित्यलं बहुविस्तरेण ॥

१६२. **कदाचिदाचार्यैरङ्गीकृतेवाविद्या, तत्रापि न भावाविद्यास्वीकार** : यत्पुनरुच्यते नैष्कर्म्यसिद्ध्यादौ वार्तिककार सुषुप्ताविद्यां साधयामासेति । अत्रोदाहरणमर्हत्येषाऽऽख्यायिका – कश्चित्किल धनाढ्य श्रेष्ठी मुमूर्षु स्वपुत्रानाहूय सप्रेममुवाच-- 'सप्तदश खलु मदीया मत्तमानङ्गा । ममेदं चरमानुशासनं यज्ज्येष्ठो युष्माकमनुभवत्वर्धं तत्सङ्ख्याया , द्वितीयस्तृतीयांशं भजतु, कनिष्ठ· पुनर्नवमांशं हरतु' इति । एवं वदत एव तस्य किल प्राणा उदक्रामत् । ते ह पुत्राः पितुरुत्तरक्रियादिकं निर्वर्त्य यावत्पितुर्निर्देशानुसारेण हस्तिनो विभाजयितुं प्रवर्तन्ते तावत्सप्तदशमितसङ्ख्या द्वाभ्या त्रिभिर्नवभिर्वापवर्तयितुमशक्नुवानाः कथमिदं कार्यमित्यतीव खिन्ना परस्परं विवदन्ते स्म । इत्थं भृशं कलहायमानास्ते न्यायस्थानमेत्य विवादकारण प्राड्विवाकाय न्यवेदयन् । तेन पुनर्निपुणमतिना पृष्टा-- 'यद्यह मदीयमेकं हस्तिनं दद्याम्, तर्हि किं यूयं तदपि स्वीकृत्य पितुर्यूथे मेलयित्वा पितुरभीष्टप्रकारेण गजांस्तत्तदंशसंख्याकान् हर्तुमनुमन्यध्वे' इति । अतीव हृष्टास्ते ऊचुरस्त्वेवमिति । तदा यावज्ज्येष्ठो हरति स्वांशमष्टादशानाम्, द्वितीयस्तृतीयांशम्, कनिष्ठश्च नवमांशम्, तावन्नि-

लित्वा तेषां गजा· सप्तदशैव सम्पन्ना· । तत· प्रोवाच न्यायनिर्णेता— यत· खलु भवतामन्यतमस्यापि नास्तीदानीमपरितोषकारण पितुर्निदेशस्य परिपूर्ते·, तस्मान्मदीयोऽयं हस्ती मामकीन एव संवृत्त इति । यथायं दृष्टान्तस्तथात्राप्यनुसन्धेयम् । अस्ति खलु सप्तदशकं लिङ्गशरीरं नाम । तस्यास्य वृत्तिं स्थानत्रयेऽपि द्रष्टुमीहन्तो न प्रभवन्ति तथा कर्तुम्, यत्कारणं तस्य लिङ्गस्य वृत्ति सुषुप्ते न सम्भवति । तथापि योऽय महानाग्रहः सुषुप्तावपि तेन भाव्यमिति, स केवलमविद्यानिबन्धन इति वेदान्ताभियुक्तैरुपदिश्यते । न चात्राविद्या नाम किञ्चिन्नव्यं वस्तु निर्मितं निरूपकैः । कि तर्हि व्यपदेशमात्रमेव । यथा न्यायनिर्णयार्थं प्रत्त इवाभूद्धस्ती प्राड्विवाकेन, न तु तथ्यतोऽपि प्रत्त एवायं वादिभ्यः । तथा श्रद्धालूनामस्ति वस्तु किञ्चित्सर्वत्रानुगतमवस्थात्रयेऽपीत्यभिनिविशमानाना सोपानक्रमेणोपदेष्टुमविद्येति नाममात्रं किञ्चिदुपदिष्ट क्वचित् वृद्धै· । अस्ति काचिदविद्या सुषुप्तौ यस्याः कार्यमिद सर्व जगदिति । तां गृह्णन्तु तावत् । विदिते तु परमार्थे विज्ञायेतावश्यं यन्नाममात्रमभूदविद्येति । वस्तुगत्या पुनर्या न विद्यते सैवाविद्येति । अत्राह -- समायातस्तर्हि घट्टकुटीवृत्तान्त· । किमर्थस्तर्हि भवतां भावाविद्यानिरसनप्रयास इति? उच्यते— भावानभिज्ञो भवान् । न ह्यस्माभिरुक्तं भावाविद्यामपि सुषुप्तावूरीकृतवन्त आचार्या इति, कि तर्हि विद्याभावमेवेति ॥

१६३. **नैष्कर्म्यसिद्ध्यभिहितसौषुप्ताविद्याविचारः:** नैष्कर्म्यसिद्धिवाक्यमप्येवंपरमेव, ग्रन्थकृता क्वचिदपि कारणाविद्याया अनभिहितत्वात् । इत्थं ह्यत्र प्रतिपादनरीतिः-- यत्साक्षिकौ जाग्रत्स्वप्नसुषुप्तानामागमापायौ स आगमापायविभागरहित आत्मेत्यनुमाने-

नैवात्मस्वभावस्य प्रतिपत्तु शक्यत्वाद्वाक्यस्य निर्विषयत्वप्रसङ्ग इत्याशङ्किते, जाग्रदाद्यागमापायरूपलिङ्गव्यवधानादात्मप्रतिपत्तेः साक्षात्त्वं न सम्भवति, साक्षात्प्रतिपत्तिकारणं तु वाक्यमेवेति परिहार उक्तः। तत पुनरपि शङ्कते पूर्वपक्षी-- यद्येव तर्ह्यन्तरेणापि वाक्यश्रवणं निरस्ताशेषविकल्पमागोपालाविपालपण्डितं सुषुप्ते वस्तु सिद्धमतो नार्थो वाक्यश्रवणेनेति। अत्रोत्तरम्-- '**नैतदेवम्। किं कारणम्? सर्वानर्थबीजस्यात्मानवबोधस्य सुषुप्ते सम्भवात्। यदि हि सुषुप्तेऽज्ञानं नाभविष्यदन्तरेणापि वेदान्तवाक्यश्रवणमनननिदिध्यासनान्यहं ब्रह्मास्मीत्यध्यवसायात्। सर्वप्राणभृतामपि स्वरसत एव सुषुप्तिप्रतिपत्ते सकलसंसारोच्छित्तिप्रसङ्गः**' इति। अत्र निरस्ताशेषविकल्प वस्तु निद्रायां न विद्यत इति नोच्यते, किं तर्हि तत्र तज्ज्ञानाभावान्न सुषुप्तिप्राप्तिमात्रात्सकलसंसारनिवृत्तिस्ततो वाक्यश्रवणमेषितव्यमिति। अत एव तत्रात्मज्ञानाभावो नास्तीति शङ्कित्वा परिहरति--'**ननु यदि तत्राज्ञानमभविष्यद्रागद्वेषघटाज्ञानादिवत्प्रत्यक्षमभविष्यत्। यथेह लोके घटं न जानामीत्यज्ञानमव्यवहितं प्रत्यक्षम्**' इत्यादिना। तदिदमज्ञानं सुषुप्तावनुमतं न भावाज्ञानमिति तु स्पष्टमेव घटाज्ञानदृष्टान्तसामर्थ्यात्॥

इतश्चैतदेवं विज्ञेयं यत्कारणमस्मिन्नेव प्रकरणेऽज्ञानं प्रकृत्यैवं चोद्यपरिहारावुपलभ्येते-- '**अज्ञानं हि ज्ञानाभावस्तस्य चावस्तुस्वाभाव्यात्कुतः संसारकारणत्वम्? न ह्यसतः सज्जन्मेष्यते**' इति चोद्यम्। '**अत्रोच्यते-- अज्ञात एव सर्वोऽर्थः प्राग्यतो बुद्धिजन्मनः। एकेनैव सता संश्च सन्नज्ञातो भवेत्ततः॥**' इति परिहारः। यदि हि वार्तिककारस्य भावाविद्या सम्मता स्यात् तर्हि

नाज्ञानमभावः, किं तु भाववस्तु ततो न दोष इति वदेत् । न पुनरज्ञातसद्वस्त्वेव कारणमिति । अतोऽवगम्यते मूढबुद्ध्यनुसारेणाभ्युपगम्यमानमप्यज्ञानं न भावरूपं किन्त्वनवबोधमात्रं नित्यनिवृत्ताविद्यात्मनि मूढैः कल्पितमिति । अत एव विद्वद्दृष्टिमवष्टभ्य पदे पदे विचारशून्यमूढबुद्धिसिद्धत्वमेव वर्णयत्यविद्यायाः । '**अविचारितप्रसिद्धाविद्या**', '**अतिदुःस्थोऽप्रबोधोऽत्र**', '**नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः ।**' इति अतः सुषुप्ताज्ञानवचनं विषयवासितदुर्धियां दृष्टिमनुरुध्येति नैष्कर्म्यसिद्धावेव विस्पष्टं भवति ॥

**१६४. सौषुप्ताज्ञाननिराकरणं चोपलभ्यते नैष्कर्म्यसिद्धौ :**
वस्तुतस्तु सौषुप्ताज्ञानं न केवलं नाभिहितम्, किं तु ग्रन्थकृतोऽत्यन्तमनभिमतमित्यत्राप्यस्ति प्रमाणम् । यत्कारणं प्रकृतग्रन्थशेषेणाचार्येणेत्थमुक्तम्-- '**इदं ज्ञानं भवेज्ज्ञातुर्ममज्ञानं तथाहमः । अज्ञानोपाधिनेदं स्याद्विक्रियातोऽहमो मम**' ॥ अस्यार्थः-- यदा वस्तुनि ज्ञानं जातं तदनन्तरं नास्ति ज्ञानकृत्यमिति ज्ञानोत्पत्ते पूर्वरूपमेव ज्ञेयस्येदंज्ञानविषयत्वं ज्ञातुश्च ज्ञातृत्वं नाम । तस्मादज्ञानोपाधिनैव ज्ञातुर्ज्ञेयविषयकमिदंज्ञानम् । ममेति ज्ञानं पुनर्नकेवलमज्ञानमपेक्षते. किन्त्वहङ्कारविक्रियामपि । न ह्यहमो विकारं विना ज्ञातृज्ञेययोरहं ममेति ज्ञानविषयत्वं क्वचिद्दृष्टमिति । तत्रैव दार्ढ्यार्थं व्यतिरेक दृष्टान्तप्रदर्शनपरं श्लोकान्तरम् -- '**विक्रियाज्ञानशून्यत्वान्नेदं न च ममात्मनः । उत्थितस्य सतो ज्ञानं नाहमज्ञासिषं यतः ॥**' इति । इदमुक्तं भवति-- ज्ञातृत्वाहन्ताविरहितस्यात्मनः सुषुप्ते विक्रियाशून्यत्वादज्ञानशून्यत्वाच्च न भवति ममेति, इदमिति वा ज्ञानम् । यतः सुप्तोत्थितस्य नाहं किञ्चिदज्ञासिषमिति ज्ञान जायते, अतः

सर्वैरवश्यमभ्युपगन्तव्यमज्ञानाहङ्कारविकारशून्यमेव सौषुप्तं स्थानमितीति । ये त्वत्र-- कथमज्ञानशून्यत्व सुषुप्तेऽप्यज्ञानस्य साधितत्वादित्याशङ्क्य तत्राज्ञोऽहमिति स्फुटतरव्यवहाराभावात्तथोच्यते। उत्थितस्यैव सतो नाहमज्ञासिषमित्यज्ञानं सम्भवतीति यत इति योजनां कृत्वा परिहारं मूलाज्ञानमङ्गीकृत्य वर्णयांबभूवु । तेषा श्रुतस्याज्ञानशून्यत्वस्य हानि., अश्रुतस्य स्फुटतरव्यवहाराभावात्तथाव्यपदेश इत्यस्य कल्पनम्, नाज्ञासिषमिति सुषुप्तिविषयकसर्वज्ञानाभावबोधकवाक्यस्य स्वारस्यं विहायाज्ञानार्थकत्वकल्पनक्लेशो ग्रन्थकर्त्रभीष्टव्यतिरेकदृष्टान्तासिद्धिश्चेत्येते दोषा मुखपिधानं कुर्वन्ति ॥

ननु तवापि व्याख्यानं न निर्दूषणम् । न किञ्चिदज्ञासिषमिति स्मरणबलाच्चेत्सुषुप्तावज्ञानं साध्यते, कथ तर्हि तत एव सुषुप्तावज्ञानमस्तीति ब्रुवत पक्ष परित्यक्त· स्मृतिरनुभवपूर्विकेति नायमेकान्त इत्युपपादयता भवता? अपि च वाक्यश्रवणमन्तरेण न ब्रह्मात्मताध्यवसाय इति वक्तुं सुषुप्तौ निगदितमज्ञानं वार्तिककृता । तच्चेन्निराक्रियेत स एव वाक्यश्रवणप्रयोजनाभावः पुनरापद्येतेति । उच्यते-- न हि वय सुप्तोत्थितपरामर्शाज्ज्ञानाभावं साध्यामः, कथं तर्ह्यनुभवादेव । न हि किञ्चिज्ज्ञायते सुषुप्तौ केनचिदिति । उत्थितस्य सतो ज्ञानमिति वार्तिकं तु यत्र विद्यते विशेषविज्ञानं जाग्रति तत्र सुप्तोत्थितपुरुषमात्रस्य सुषुप्ते नाहमज्ञासिषं किञ्चिदित्येवं खलु जायते मतिः। तेन सुषुप्तौ विशेषविज्ञानस्यानुमानमपि न सम्भवति, ततो नास्त्येवाज्ञानं तत्रेत्येवंपरतया व्याख्येयम् । यद्वा कथमज्ञानविक्रियाशून्यत्वं सुषुप्तात्मनः? नाहमज्ञासिषमिति स्मरणबलादेव सुषुप्तेऽप्यहमोऽज्ञानस्य चानुमानादेव सुप्रतिपदत्वादित्याशङ्क्य

परिहारः— उत्थितस्य सतो ज्ञानमिति । अयमर्थः — उत्थितस्य हीदं ज्ञानम्, जागरितावच्छिन्नज्ञातुरिति । तेन जागरितावच्छिन्नज्ञातुर्धर्मेण शुद्धात्मनि विकाराज्ञानानुमानं न समीचीनमित्यभिप्रायः ॥

यत्तूच्यतेऽज्ञानशून्यत्वे वाक्यश्रवणप्रयोजनाभावप्रसङ्ग इति । तत्र परिहारं स्वयमेवाचार्यो वक्ष्यति— '**अपविद्धद्वयोऽप्येवं तत्त्वमस्यादिना विना । वेत्ति नैकलमात्मानं नान्वेष्यं तत्र कारणम् ॥**' इति। दशमज्ञानरहितस्य दशमत्वे स्वतः सिद्धेऽपि दशमस्त्वमसीति वाक्यश्रवणं यथार्थवत्, तथा द्वैतसंसर्गशून्यस्यापि तत्त्वमस्यादिवाक्यश्रवणमर्थवद्भवति । तदर्थवत्त्वाय वस्तुसतीमविद्यां कल्पयितु नावश्यकमित्यर्थः । तस्मात्सम्यगेवास्मदीयं श्लोकव्याख्यानम् । तदित्थं वार्तिककारेण सर्वानर्थबीजस्येत्यादिना सुषुप्तावङ्गीक्रियमाणमज्ञानं न मूलाज्ञानम्, किं तु लौकिकैरारोप्यमाणमग्रहणमिति सिद्धम् ॥

१६५. **बृहदारण्यकवार्तिके तैत्तिरीयवार्तिके च सौषुप्ताविद्या कण्ठरवेणैव निरस्ताः** अपि च नैवात्र विवदितव्यम् । यतो बृहद्वार्तिके प्राहाचार्यः— '**एतदस्य स्वतो रूपं यदत्रोपप्रदर्शितम् । अविद्याकामकर्मादिविविक्तं यत्सुषुप्तगम् ॥**' इति । **तत्तु द्वितीयं नेहास्ति तमोऽनर्थस्य कारणम् । दृष्ट्यादिरूपसम्भेदाद्यत्पश्येज्जागरे यथा ॥**' इति च । तैत्तिरीयके च— '**निर्धूताशेषबोधोऽयमवाक्यार्थात्मकस्तथा । सुषुप्ते गम्यतेऽस्माभिर्नानृतं श्रुतिगौरवात् ॥**' इति । समानप्रकरणत्वाद्यद्यदत्र विचारे भाष्यसमालोचने न्यवेदि तत्सर्वमिहाप्यनुसन्धेयम् । तत्सिद्धमेतद्वार्तिककारस्यापि सम्मतैवास्मदीया प्रक्रियेति ॥

**१६६. श्रीगौडपादाचार्यसम्मतिः :** यदप्युच्यते-- 'प्राज्ञ कारणबद्धस्तु' इत्यादिना सुषुप्तेऽज्ञानसत्त्वमुक्त्वा तद्व्यतिरेकेण तुरीयमुपदिशति कारिकाकृदिति । तदप्येतेन परिहृतप्रायम् । विश्वादिभेदेनात्मा विकल्प्यते सर्पादिभिरिव रज्जुरित्येवंपरत्वात्प्रकरणस्य । एतदत्राचार्याकूतम्-- 'प्राज्ञ' कारणबद्धस्तु', अग्रहणकल्पनमेव सुषुप्तात्मन स्वरूपानिर्धारणे हेतु, यथा विश्वतैजसयोरन्यथाग्रहणसमुच्चित तत् । तस्मात्प्रातिस्विकावस्थाभिमानकल्पितं बन्धं विवेकेन विधूय स्वेनैव निष्प्रपञ्चरूपेणावधारणीय आत्मेति । तदेव प्राज्ञे कल्पितमेवाज्ञानं न वस्तुसदित्येवाचार्याभिप्रायः । अत एव प्राह-- '**तुर्यं तत्सर्वदृक्सदा**' इति । 'सदा' जागरितस्वप्नसुषुप्तिकल्पनाकालेऽपीत्यर्थ[१] । अत एव च-- '**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते**' इति । 'विपर्यास', अवस्थाकल्पनम्, 'तयोः' स्वप्ननिद्रयोः ॥

**१६७. सुषुप्तोऽन्यो न तत्सम इति कारिकाया अर्थः :** ननु '**सुषुप्तोऽन्यो न तत्समः**' इति सुषुप्तिसमाध्योर्वक्ष्यति भेदम् । समाधिश्च तुर्यावस्था निदिध्यासनलभ्या चेति केचित्प्रचक्षते । नैतदेवम् । अत्र हि विवेकसमर्थानामात्मसत्यानुबोधेनेत्यादिना मनोनिरोधः फलतयोच्यते । यदा मनस. सिध्यत्यमनीभावस्तदा द्वैत नोपलभ्यते । अमनस्ता च जागरिताद्यवस्थास्वव्यभिचरितस्वरूपत्वादात्मैव सत्यमिति निर्धारणात् । एवसिद्धमनोनिरोधफलक यद्द्वैतादर्शन तत्प्राकृतजनसामान्यत' सुषुप्तिसिद्धद्वैतादर्शनेन न तुल्यम्, अपित्वात्यन्तिकमेव, यस्मादत ऊर्ध्वं द्वैतसत्यत्वबुद्धिर्वन्ध्यप्रसवा

१. त्र्यवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात्, तत्त्वमसीतिवत् ॥ --म॰ भा॰

भवतीति । भाष्यकारीयं च वचनमत्रैवमेव विज्ञेयम् । **यस्मात्सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिबीजवासनावतो मनस आत्मसत्यानुबोधहुताशविप्लुष्टाविद्यानर्थप्रवृत्तिबीजस्य निरुद्धस्यान्य एव प्रशान्तसर्वक्लेशरजसः स्वतन्त्रः प्रचारः । अतो न तत्समं'** इति हि भाष्यम् । अयमाशयः— यथा विस्मृतरज्जुसर्पज्ञानस्यावधृतरज्जुयाथात्म्येनबाधितरज्जुसर्पज्ञानस्य च विशेषोऽस्ति, एवं सुषुप्तिलभ्यमनोलयस्य विवेकलभ्यमनोनिरोधस्य चास्ति महदन्तरमिति । तस्मादत्र नास्ति सुषुप्ताविद्यावादस्यावकाशः ॥

१६८. **मनोनिरोधविधायककारिकातात्पर्यम् :** यत्तु बोधोपायत्वेन निरोधं पृथगुपदेक्ष्यति -- '**मनसो निग्रहायत्तमभयं सर्वयोगिणाम्**' इत्यादिना । तत्रायमभिसन्धि.-- सुषुप्तिगमन स्वाभाविकमिति न तदालोचनयैव मन्दाना[1] बाह्यासक्तचेतसामद्वितीयात्मतत्त्व सहसा विज्ञातुं शक्यम् । तत उत्थाने जागरिते यथापूर्व द्वैताभिमानस्य विजृम्भमाणत्वात् । निर्विशेषप्रत्ययानवकाशाच्च सुषुप्ते । निरुद्धे तु चित्ते बाह्यविषयकचिन्तनपरित्यागपूर्वक प्रयत्नसम्पादितत्वान्निरोधस्य विषयसम्बन्धराहित्यमात्मनो निराबाधं बोद्धुं शक्येतेति । एतेन समाधेस्तुरीयत्वमाचार्यानभिमतमिति दर्शितं भवति, कादाचित्कत्वोक्तेः समाधेः-- '**निष्पन्नं ब्रह्म तत्तदा**' इति । तस्मादुपायनिर्देशपरत्वात्प्राज्ञवाक्यस्य निरोधवाक्यस्य च, सुषुप्त्यविद्यानिरसनं नासम्मतं भगवत इति सिद्धम् ॥

१. ये त्वतोऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसम्बन्धि पश्यन्ति तेषामात्मसत्यानुबोधरहितानां मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम् ॥ —का० भा०

**१६९. भावाविद्यावादिनां सूत्रकारभाष्यकाराभ्यां विरोध. :** स्थितमेतत् सूत्रकारद्यभियुक्तोक्तवर्त्मन्येव वर्ततेऽस्मदीयं दर्शनमिति । तद्वैपरीत्येन स्थितं प्रतिवादिमतमित्यत्रास्ति गमकम् । दिङ्मात्रमिह दर्शयिष्यामस्तद्यथा-- '**जन्माद्यस्य यतः**' '**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्**' इति च सूत्रकार. । भाष्यकारश्च-- '**यत इतीयं पञ्चमी जनिकर्तु. प्रकृतिरिति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या. । निमित्तत्वं त्वधिष्ठात्रन्तराभावादधिगन्तव्यम्**' इति । अत्र जगतो निमित्तमुपादानं च ब्रह्मैवेति प्रतीयते । तत्र सुषुप्तौ विद्यमान आत्मैवाल जगदात्मना विवर्तायेति स्थिते. अविद्यैव जगदुपादानबीजमिति दुराग्रह । ननु '**तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते**', '**मायां तु प्रकृतिं विद्यात्**' इत्युभयश्रुत्युपपत्त्यर्थं मायासंशब्दिताविद्याया आत्मनश्चोपादानत्वमस्तु रज्ज्वा संयुक्तसूत्रद्वयवत् । न । '**मायिनं तु महेश्वरम्**', '**मम माया**' इति श्रुतिस्मृतिभ्यां '**तदधीनत्वादर्थवत्**' इति सूत्राच्च मायायाः पृथक्कारणत्वकल्पनायोगात्, गौरवाच्च । न च ब्रह्म विवर्तोपादानमविद्या तु परिणाम्युपादानमिति स्वीक्रियते, अतो नोक्तदोष इति मन्तव्यम्. अविद्याया परिणामित्वे मानाभावात् । जगदात्मना परिणताया अविद्यायाः पुनरपि पूर्वभावस्वीकरणासम्भवाच्च दध्याद्यात्मना परिणतक्षीरादिवत् । मृदादिवत्सम्भविष्यतीति चेत् । न, मृदादेरेकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यरूपावभासित्वाद्विवर्तोपादानत्वस्यैव स्वीकर्तुमुचितत्वात् । ननु माया द्वारकारणमित्येवास्तु । न, तस्या अपि कारणापेक्षणप्रसङ्गात् । न चेष्टापत्ति., अनादित्वप्रतिज्ञाहाने. । अत्र केचिदाहु -- 'ततोऽन्नमभिजायत' इति श्रुत्या सादित्वमप्यस्तु ।

यथाशुतन्त्रतन्त्वारब्धोऽपि किल पटोऽशुतन्त्रः प्रतीयते, एवं ब्रह्मपरतन्त्रत्वादविद्यायास्तत्कार्यमपि जगद्ब्रह्मपरतन्त्र भविष्यतीति । न, ब्रह्मण एवाविद्याहेतुत्वे न स्यात्ततोनिर्मोक्षप्रत्याशा । सति हि कारणे न निर्निमित्तं कार्यनाशः । नाशे वा पुनरुत्पत्तेर्नास्ति निवारक इति । अथैतद्दोषक्लेशजिहीर्षया मायैव साक्षादुपादानं जगतः, **ब्रह्म** तूपचारात्तथेत्यास्थीयते जगदुपादानमायाश्रयत्वाद्ब्रह्मण इति । हन्त पुनरायात· सूत्रभाष्यविरोध· पुरोदित· ॥

नन्वविद्यापरिणामोक्तिर्न भाष्यविरुद्धा '**अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते**' इत्युक्तेः । मैवम्, अविद्याकल्पितेनेत्युक्तौ परिणामित्वमेवाविद्याया उक्तमिति मन्तुमनुचितत्वात् । अविद्याप्रतिबद्धव्यावहारिकदृष्ट्या परिणामोक्ति·, परमार्थदृष्ट्या तु न परिणाम इति ह्युदाहृतभाष्यार्थ । ननु ब्रह्मण एकरूपत्वात्सावयवमृदादिदृष्टान्तप्रणयन परिणाम्युपादानान्तरसद्भाव गमयति । मैवम् । मृदादेर्विवर्तोपादानत्वेनैवोक्तोत्तरत्वात् । अपि च छान्दोग्यभाष्य एतदाशङ्क्य परिहृतम्—'**निरवयवस्य सतः कथं विकारसंस्थानत्वमुपपद्यते? नैष दोष·, रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेः**'इति । यदि हि भाष्यकारस्याविद्यापरिणामित्वमिष्टमभविष्यत्तदा 'नैष दोष·, अविद्याया एव परिणामित्वाभ्युमगमात्, ब्रह्मणस्तु तद्द्वारैव विकारसंस्थानत्वोपचारात्' इत्येवावक्ष्यत् । तदेवमविद्यां जगदुपादानत्वेन वाञ्छतां '**प्रकृतिश्च**

१ अनिर्मोक्षप्रसक्ति स्यायद्यविद्या परात्मन ॥ —वा·

**प्रतिज्ञादृष्टान्तानुपरोधात्**' '**आत्मकृतेः परिणामात्**' इत्यादिसूत्रविरोधस्तद्भाष्यविरोधश्चेति स्फुटम् ॥

. एवं सुषुप्तावपि जीवब्रह्मविभागं स्वीकुर्वताम्--'**तदभावो नाडीष्वात्मनि च**' '**अतः प्रबोधोऽस्मात्**' इति सूत्रतद्भाष्यविरोधः। '**सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति**' इत्यादिभाष्यवाक्यैरुदाहृतैर्विरोध. स्फुट एवेति न पुनरिहोपन्यस्यते ॥

१७०. **गौडपादसुरेश्वराचार्यवचनविरुद्धं च भावाविद्यावादिमतम्**. एवं कारिकाकारमतं वार्तिककारमतं च विरुणद्धीद सुषुप्ताविद्यामतम्। द्वैतप्रपञ्चस्य जातिरेव नास्ति, अस्तीति तु मृषाबुद्धिरिति हि श्रीगौडपादैर्विस्तरेण प्रतिपादितम्। तद्विरोधेनाचार्यदेशीयै प्रपञ्चस्य जन्माभ्युपगतम्। न च व्यवहारदृष्ट्यैवायमभ्युपगमः '**जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ।**' इत्याचार्यैरप्यङ्गीकृतैव जगज्जातिरिति वाच्यम्। अविद्या सर्वत्राप्यवस्थायामभ्युपगच्छता तस्या व्यावहारिकत्वोक्तेरसङ्गते। 'सा च माया न विद्यते' इत्यादिना मायाया असत्त्वमाचार्येणोपदिष्टम्। तत्तु प्रतिवादिनां मते न सम्भवत्येवेत्यस्ति वैषम्यम्। तथा शरीरपातानन्तरमेव निरुपचरितं कैवल्यं तत प्राक्तु न तथेति कारिकाप्रतिषिद्ध एवाभ्युपगमः। '**प्रागुत्पत्तेरजं सर्वं तेनादौ कृपणः स्मृतः।**' इति कारिकाकारैः परिनिन्दितत्वादस्य वादस्य। उदाहृतान्येव वार्तिककारवचनानि सुषुप्तौ शुद्धात्मबोधकानि। तद्विरोधश्चातिस्फुटः। प्रस्थानत्रये तद्भाष्ये वार्तिके कारिकाग्रन्थे वा भावरूपाविद्याप्रक्रिया न कटाक्षेणापि वीक्षितेत्येतत्तु न विस्मर्तव्यम्। तदेवं सङ्क्षेपतो वर्णितः सुषुप्ताविद्यावादिनामभियुक्तमतविरोधः ॥

तस्मात्सूत्रभाष्यवार्तिककारिकाकृतां वचनं न क्वचिद्विरुणद्धीदमस्मन्मतम्, प्रत्युत तैरेवानुगृहीत सुषुप्ताविद्यानिरसन विशदयामो वयमिति सर्वं निरवद्यम् ॥

**१७१. सुषुप्त्यविद्यानिरसनं श्रुत्यादिसम्मतमित्यत्र युक्तिः :** अथेदानीं पुरोदितप्रक्रिया श्रुत्यादिसम्मतेति सम्भावनाय युक्तिद्वयमुपन्यस्यते विशेषत । अवस्थात्रयपरीक्षणान्यथानुपपत्तिस्तावत्प्रथमा युक्ति । सर्वेषु हि वेदान्तेषु जाग्रदाद्यवस्था साक्षादाराद्वा विचार्यन्ते । कस्मै प्रयोजनाय कल्पेत तद्विचारः ? न तावदविद्यावत्त्वमात्मन्यवगमयितुं तादृशज्ञानस्यापुरुषार्थत्वात् । नापि स्थानत्रयेऽप्यादर्श्य द्वैतमलं तदुपादानभूतां चाविद्याम् तद्व्यतिरिक्तस्थितिज्ञापनार्थ स विचार । बह्वीनामुपनिषदा सुषुप्तिनिरूपणेनैवोपक्षयात्, स्थानान्तरवर्णनेऽनादरात्, सुषुप्तिविषये **'परम आनन्दः'**, **'परमो लोकः'** इत्यादिविशेषणानामविद्योपगमविरुद्धानामुपादानाच्च । चतुर्लक्षण्यां च सुषुप्तिसमनन्तरमनुपन्यस्य तद्व्यतिरिक्तं स्थानं **'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'** इत्यनेन न केवलं स्वतः, किं नाम, स्थानतोऽपि नास्ति निर्विशेषतासविशेषतारूपोभयलिङ्गत्वमात्मन इति वदता स्थानत्रयमेवालं शुद्धात्मप्रतिपत्त्या इति सूचितत्वाच्च । यद्यपि क्वचित्तुरीयमुपदिष्टमुपनिषत्सु । शारीरके च-- **'अपि संराधने प्रत्यक्षानुमानाभ्याम्'**, **'समाध्यभावाच्च'** इति समाधिसंराधनादिशब्दव्यपदेश्या तुरीया काचिदवस्था सूच्यते । तथाप्युपनिषत्सु तुरीय न स्थानान्तरमित्युच्यते, नापि सूत्रे समाधौ भावाविद्याविनाश उक्त इति न किञ्चिदेतत् । यस्तु मन्यते-- आत्मदर्शनोक्तिबलादेव स्वीक्रियते तत्राविद्यानाशोऽपीति, तं प्रति कथमविद्यानाशेऽपि समाध्यवस्था-

सकाशादुत्थानं सिध्येत्, तत्सिद्धौ वा कथं समाधे सुषुप्तिसकाशाद्विशेष इत्यादि पुरोदित युक्तिजाल दुरुत्तरमत्राप्यावर्तनीयम् । अतो न समाधिसूत्रणमात्रेण सुषुप्तिरविद्यायुता तद्रहिता वा भविष्यति, उभयोरप्यवस्थयोरविद्याविषये समानयोगक्षेमत्वादिति न विस्मर्तव्यम् । तस्मात्सिद्धमिद यदवस्थात्रयचिन्ता नार्थवती स्यात्तेषा ये सुषुप्तावविद्यामास्थिषत । आस्माकीनप्रक्रियाया तु तयैव सर्वशङ्कातङ्कपरिहार इति ॥

**१७२. गुरुज्ञानवासिष्ठगताद्वैतखण्डनान्यथानुपपत्तिः :** अस्ति च निदर्शनान्तरं सुषुप्तगविद्यानिरास एवाद्वितीयब्रह्मवादिना सर्वेषा सम्मत आसीत्, सम्प्रदायविच्छित्त्या तु तार्किकसहयोगात् कारणान्तराद्वा विस्मृत्येता प्रक्रियां सुषुप्तेऽपि भावाविद्यामदृष्टश्रुतचरीमभ्युपगतवन्त आस्माकीना इत्यत्र । अस्ति गुरुज्ञानवासिष्ठ नाम केनचित्प्रच्छन्ननाम्ना वैदिकाद्वैतसिद्धान्तमसहमानेन प्रणीतो निबन्ध । यस्य खलु ज्ञानकाण्डाभिदस्य भागस्य पादचतुष्टयमस्ति । अत्र च ग्रन्थप्रणेत्रा विवर्तवादारूपब्रह्मवादनित्यसिद्धाद्वैतवादादयः शिष्टसम्मताः परिनिन्दिता –

"जगद्विवर्तवादिभ्यो जीवारम्भादिवादिनः ।
उत्कृष्टाः स्युस्ततोऽप्यन्ये परारम्भादिवादिनः ॥,
अनाद्य एव नीरूपं शिष्यस्योद्बोधयेदलम् ।
स्वेच्छाविहाराद्यासक्तो वित्तार्थी च प्रतारकः ॥,
ब्रह्मत्वेनैव जीवस्यावस्थानं मोक्ष उच्यते ।
तस्य चेत्प्राप्तपूर्वत्वमुपदेशो वृथा तदा ॥"

इत्यादिना

परिणामवादश्रेष्ठत्वं ब्रह्मणो विधिशेषत्वं ब्रह्मणस्त्रिरूपत्वम्, विदुषोऽपि स्वाश्रमकर्मबद्धत्वम्,— इत्यादयो विषया, व्यवहारत्वमनिर्णीयैव दुराग्रहमात्रेण व्यावहारिकदशायां द्वैतमेव, परमार्थदशाया त्वद्वैतमिति सर्वसङ्करवादश्चेत्येतत्सर्वं वासिष्ठकारोक्त दूषणायानूद्यमानममि मन.खेदमापादयेत् पूज्यपादश्रीशङ्करभगवत्पादमतानुयायिनामिति न प्रपञ्च्यते। अनेन खलु पण्डितापसदेन स्वात्मान पराश्च वञ्चयितुमबिभ्यता भगवत्पादैर्बृहदारण्यकादिभाष्येषु समूलघात घातिता अपि भर्तृप्रपञ्चादिवृत्तिकारसम्मता द्वैताद्वैतवादविशेषाः परिशुद्धाद्वैतप्रद्वेष मात्रेण प्रकारान्तरेणोत्थापिता । न तु क्वचिदपि नवीन किञ्चिदुपपादन कृतम् । स्वमतप्रशसा चात्रैवं कृता—

"अद्वैतिभिर्द्वैतिभिश्च विशिष्टाद्वैतिभिश्च वा ।
यद्यत्प्रणीतं भाष्यादितत्तत्सर्वमसङ्गतम् ॥
अस्मदीयैर्बुधश्रेष्ठैर्द्वैताद्वैतात्मवादिभि· ।
यद्यत्प्रणीतं भाष्यादि तत्तत्सर्वं हि सङ्गतम् ॥" इति ॥

द्वितीयपादश्चास्य ग्रन्थस्य केनचिदप्पय्यदीक्षितनाम्ना, विरचितयाधिकरणकञ्चुकाख्यया व्याख्यया संवलितः। तत्र कोऽय दीक्षित इति न ज्ञायते । विश्वस्यते तु बलवद्यदयं सुगृहीतनामभिरनेकाद्वैतग्रन्थसन्दर्भप्रथितयशोभिर्दीक्षितवर्यैर्भिन्न एव सर्वथेति । भवत्विद यथा तथा । अस्मिन् ग्रन्थे तु श्रीभगवत्पादीयभाष्यप्रतिपादिताः प्रायश सर्वेऽप्यद्वैतोपदेशाः खण्डिता युक्त्याभासै । अद्वैतवाक्यानि च वाक्याभासमात्राणीति प्रदर्शयितुमेवमुक्तम्—

"अद्वैतवादिवाक्यानि कोटिशः सन्तु वा विधे ।
तानि सर्वाणि सामान्याद्दुर्बलानीति निर्णयः ॥" इति ॥

विशेषतश्च गाढनिद्रायामविद्या नास्तीति वदनां मन ग्रन्थे सर्वत्र खण्डनायोपाददेऽसौ सम्प्रदायाविष्टचेता मीमासकमहाशय । तद्यथा–

"ब्रह्मन् वेदान्तवाक्यानि सुप्त ब्रह्मेति कानिचित् ।
तुरीय कानिचिद्ब्रह्मेत्याहु शृण्वत्र निर्णयम् ॥"

इत्युपक्रम्य–

"तुरीये प्राज्ञसज्ञोऽसौ जीव शेते स्वमोचने ॥.
सुषुप्तिकाले सकले लीन इत्यत्र चात्मन ।
तमोऽभिभूतशब्दान्न परमात्मेति हि स्फुटम् ॥.
अस्यापहतपाप्मत्वाद्युपचर्यत एव हि ।
जाग्रत्स्वप्नगतस्थूलसूक्ष्मा विकृतयोऽत्र न ॥.
बाह्याभ्यन्तरविज्ञानप्रतिषेधस्तथा भवेत् ।
उपचारानपेक्ष स तुर्य एव हि सिध्यति ॥,
जीवत्रयपरामर्शस्तुर्यात्मास्त्यर्थ इष्यते ।
जीवद्वयपरामर्श· सुषुप्तास्यर्थ इत्यसत् ॥,
सुषुप्तादधिक ब्रह्म ह्यसकृच्चावधार्यते ॥,
सुप्तिस्थानत्ववचने नाडीनां लक्षणावशात् ।
परस्यैवात्मनो वाच्यमित्याहु· केचन त्वसत् ॥.
अवस्थात्रयशून्यत्वश्रवणाद्धि सहस्रश· ।
परस्य सुप्तिस्थानत्वशङ्का स्वप्नेऽपि नोद्भवेत् ॥.
यदि स्यादात्मन· सुप्तिस्थानत्वं मुख्यया तदा ।
पशुपक्ष्यादयः सर्वे ब्रह्मनिष्ठा इति ह्यसत् ॥.
सर्वोपहासयोग्यत्वेऽप्यस्य लोकेषु सर्वशः ।

सुषुप्तब्रह्मवादस्य प्राबल्यं बत दृश्यते ॥,
सुषुप्तस्य तु कैवल्यं परंज्योतिष्ट्वमप्यहो ।
वदन्ति केचित्तान् लोका वदन्ति विबुधोत्तमान् ॥,
नाडीसक्तस्य सुप्तस्य त्वपदामुख्यरूपिणः ।
प्राह तत्पदलक्ष्यार्थब्रह्मतां सुप्तवाग्यहो ॥,
निर्विशेषचिदानन्दपरब्रह्मत्वमेव हि ।
सुप्तस्याचक्षते पुत्र ते वेदान्तार्थदूषकाः ॥,
निर्विशेषचिदात्मत्वमुपास्यत्वादिकं तथा ।
सुप्तस्य चेत्स्याद्ब्रह्मिष्ठा पशुपक्ष्यादयोऽप्यहो ॥,
सुषुप्तब्रह्मवादस्य दुर्बलत्वेऽपि सर्वथा ।
कैश्चित्प्रपञ्चितत्वेव यत्नोऽयं तन्निराकृतौ ॥,
आप्ताभिनयवन्तस्ते सुषुप्तब्रह्मवादिनः ।
अभूतिनो ह्यनाप्ताः स्युः सर्वदा शिष्यवञ्चकाः ॥,
असत्तमेदृशी व्याख्या सुषुप्तब्रह्मवादिनाम् ।
हिरण्यनिधिदृष्टान्तानन्विता सा हि नारद ॥,
बृहदारण्यके प्रोक्ता सम्प्रसादाभिदा यतः ।
सुषुप्तस्येव जीवस्य नेतरस्य परात्मनः ॥,
अतः सुषुप्तौ परं ब्रह्म निर्विशेषं प्रजा गता ।
इति पक्षो निराकार्यः सुषुप्तब्रह्मवादिनाम् ॥,
परमात्मनि ये शब्दाः प्रयुज्यन्ते तुरीयके ।
ते सर्वेऽपि श्रुतिस्मृत्योः सुषुप्ते सन्ति यद्यपि ॥
तथाप्यव्यवधानात्त उपचर्यन्त इत्यमुम् ।
अर्थन्नार्हसि विस्मर्तुं गार्ग्य बुद्धिमतां वर ॥,

सुप्तावखण्डैकरसं निरञ्जनं
ब्रह्मैव यान्तीत्यखिलाः प्रजा इमाः ।
वदन्ति ये तन्मतमेव कुत्सितं
जीवत्रयोक्तेरवकाशहानित' ॥,

सुषुप्तिसत्ता यदि पारमार्थिकी
तदा न भेदोऽस्ति हि सुप्तमुक्तयो ।
लब्धा गुणात्मैव विमुक्तबन्धन.
स्वाज्ञानवार्ता कथमत्र युज्यते ॥,

प्राणाप्ययो भवति यत्र स एव साक्षा-
दद्वैतनिर्गुणचिदेकरसः परात्मा ।
प्राणो न नष्ट इह दृश्यत एव सुप्तौ
तन्निर्गुणात्मधिषणा जहि सर्वथा त्वम् ॥,

निर्णेतुं श्रुत्यनुक्त कथमुचितमिति स्वान्तगा मास्तु शङ्का
सर्वत्राप्युत्तरत्र श्रुतिगदिततुरीयात्मनैर्गुण्यदृष्टेः ।
सर्वत्रान्यत्र तस्य स्वपरविषयकज्ञानशून्यत्वशब्दा-
द्धेयानन्दाकृतित्वादपि च मृगवय'सर्वसाधारणत्वात् ॥"

इति ॥

अलं बहुना कुदृष्टिनिबद्धश्लोकोदाहारणप्रयासेन । अत्र पदे पदे 'सुप्तवाद'' 'सुषुप्तब्रह्मवाद.' इति च नाम्नोल्लिख्य यज्जिहासितव्यत्वेन बहुधा विनिन्द्यते तत्कस्य मतमिति शङ्कायां प्रसिद्धेषु दर्शनेषु न कमपि सिद्धान्तं सुषुप्तौ ब्रह्मात्मतां बोधयन्तमुपलभामहे । अथ चासौ निबन्धकारः 'कैश्चित्प्रपञ्चितो वादः' 'सुषुप्तब्रह्मवादस्य प्राबल्यं बत दृश्यते ।' 'वदन्ति केचित्तान् लोका वदन्ति विबुधो-

त्तमान्' इति च ब्रुवन् कञ्चित्सिद्धान्त सर्वत्र प्रसिद्धमेव मनसि निधाय रोषाविष्टचेतास्तत्प्रसिद्धिमसहमानो गालिदानेनैवात्मान बहुमन्यत इति स्पष्टं गम्यते । वय तु पश्यामो विवर्तवादादिचिरन्तनसम्मताद्वैतवादानेव विशेषतो यदय दूषयति, तत्साहचर्यात्सुप्तिब्रह्मवादोऽप्यद्वैतिनामेवेति सम्मतोऽस्य खण्डनकारस्येति ॥

तदेव गुरुज्ञानवासिष्ठगतसुप्तिब्रह्मवाददूषणान्यथानुपपत्तिर्ज्ञापयति– एतद्ग्रन्थनिर्माणकालेऽद्वैतवाद 'सुषुप्तिब्रह्मवाद' इति प्रथां गतोऽभूद्वेदान्तविद्वेषिणा द्वैताद्वैतिनां गोष्ठीष्विति । कालान्तरे सम्प्रदायविच्छित्त्या परमतसंसर्गादद्वैतिमानिनोऽपि मतान्तरसक्रान्तिमपि बोद्धुमक्षमा कुटिलपथा प्रस्थिता स्वयमप्यजानन्त एव गुरुद्रोहमिति च । इयमेव पापीयसी प्रक्रिया तत्सजातीया वा काचिदन्या भवेद्धेतुरतिशुद्धस्याप्यद्वैतराद्धान्तस्य शोचनीयतादशाप्राप्तौ तदनुयायिष्विदानीमिति मन्यामहे वयम् । अथवा प्रच्छाद्य परकीयपक्षतामात्मन केश्चित्पतारकैरद्वैतवादोपदेशव्याजेन स्वकीया एव कल्पना प्रतिष्ठापिता नामान्तरेण शाङ्करसिद्धान्तसमाख्या रूपं च दत्वा । कारणान्तरेण स्वसिद्धान्तमजानाना निर्विशङ्क नवीनप्रस्थानमेव स्वीचक्रुर्विमूढा आस्माकीना इत्यनुमीयते । अन्यथा हि कथं स्यात्प्रवेशस्तत्तादृशाना प्रस्थानत्रयभाष्येषुप्रतिषिद्धानामपि कल्पनाना पुनरालिङ्गनं भगवत्पादीयमानिभिरेवेति ॥

तत्र गुरुज्ञानवासिष्ठे प्रतिपादिता पूज्यपादैर्निषिद्धा अथ चाधुनिकाद्वैताचार्यैरनुमोदिता वादा उदाहरिष्यन्ते व्युत्पित्सुसौकर्याय । आदौ तावत्सुषुप्ताविद्याभ्युपगमः, तुरीयावस्था समाध्याख्या निरविद्येति स्वीकारः, तस्मादुत्थितस्य जगत्प्रतीतिमङ्गीकृत्य सुषुप्तौ जग-

द्बीजभूताविद्या नास्ति चेदुत्थाने न स्यात्प्रतिभानं जगत इति व्याहतवाद., श्रवणमात्रेण कस्यचिदप्यधिकारिणो न भवति कृतकृत्यता सर्वस्यापि तु निदिध्यासनाभ्यासोऽपेक्षित इति कथनम्, साक्षात्कृततत्त्वानामप्यस्ति देहादावात्मधीरिति विरुद्धव्याहार'. समाधावप्युपगताविद्याविरहाया सूक्ष्मभेदाङ्गीकार', **'ब्रह्मविद्ब्रह्मैव भवति'** इति श्रुतिमनादृत्य भविष्यद्वृत्त्या तद्व्याख्यानम्, देहपातानन्तरमेव निरुपचरित ब्रह्मावाप्तिरिति विदुषोऽपि प्रारब्धकर्मबद्धत्व विधिनिषेधादिगोचरत्वं चास्तीति च भाषणम्, श्रुतिसूत्रादिविरोधेनाविद्या ब्रह्म च जगत्कारणमित्याख्यानम्. व्यवहारत्वमनुपपाद्यैव व्यवहारपरमार्थदशाद्वयाभ्युपगमः-- इत्येते प्रमुखा वादा. समाना आधुनिकाद्वैतिना द्वैताद्वैतमताभिनिविष्टप्रछन्नस्वनाम्नो गुरुज्ञानवासिष्ठकर्तुश्च। तत्र भवत्वेतद्ग्रन्थप्रणेता तदन्यो वा यः प्रथमं ददर्श वादानेतान्, तमनुसृत्य परमास्माकीनाः श्रुतिस्मृतिन्यायपरिशुद्धं चिरन्तनपन्थानमतिक्रम्य कष्टां गतिमापुरित्यहो मोहस्य वैभवम्!

इदं त्विह प्रकृतं-- यदधस्तादुक्तवासिष्ठग्रन्थकार स्वसमानकालीनमद्वैतं निरस्य स्वाभिमतं मृतप्रायं द्वैताद्वैतमुज्जीवयिष्यन् विशेषतः सुषुप्त्यविद्यानिरासमवधीरयामासेत्येतन्महदिद लिङ्ग तदात्वेऽद्वैतिन' सुषुप्तात्मान निर्मलमेवास्थिषतेत्यत्रेति ॥

## अवस्थात्रयपरीक्षणमेव वेदान्तोदितासाधारणप्रक्रियेत्यत्रोपपत्तिः

**१७३. अवस्थात्रयविचारणमेव वेदान्तप्रक्रियेत्यत्र शङ्का.**

एवं श्रुत्यादिप्रामाण्येन स्थापितेऽप्यस्मिन् भवेत्केषाञ्चिद्विशयः –

कथं जानीमहे वयमवस्थात्रयपरीक्षणमेव वेदान्तप्रक्रिया नान्येति? अन्यथाऽन्यथा हि दृश्यते प्रातिस्विकमुपनिषत्प्रस्थानम् । गीताप्रस्थानं चान्यादृशमेव । अन्यादृशी च शारीरकसूत्राणां प्रवृत्तिः । पुराणेतिहासादयश्च यां काञ्चिदपि प्रक्रियामवलम्ब्य सर्गप्रतिसर्गादिकं वर्णयन्ति । आचार्यैश्च बिम्बप्रतिबिम्बवादावच्छेदवाददृष्टिसृष्टिवादानिर्वचनीयवादानाद्यविद्यावादतदेकत्ववादतन्नानात्ववादेत्यवान्तरभेदेष्वन्यतमसंयुतां स्वस्वाभिमतां प्रक्रियामालम्ब्य तत्त्वनिर्णयाय प्रवर्तितमिति च सुप्रसिद्धमेतत् । तत्र यथान्यैः स्वेतरप्रक्रियया न सिद्धान्तः सिध्यतीत्युच्यते, तथावस्थात्रयप्रक्रियावादिभिरपीति को नु स्याद्विशेषोऽस्मिन् वादे? अपि च वार्तिककारः प्राह— **यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥** इति । तत्कथमिदं निश्चिनुयाम यदियमेव प्रक्रिया श्रुत्यादिसम्मतेति? तस्माद्वक्तव्यं किञ्चिदपि विस्रम्भकारणमिति ॥

१७३. **उपनिषत्प्रस्थानतात्पर्यम्ः** अत्रोच्यते— स्मर्यता यदवादिष्म प्रकरणावतारघट्टके । यद्यप्युपनिषदो भिन्नभिन्नगतय इवाभासन्ते । तथापि सूक्ष्मतरमवेक्षणेन विस्पष्टं विज्ञायते यदासां गतिसामान्यमन्योन्याकात्स्न्र्यनिवारणायान्योन्यसमाकाङ्क्षितार्थसमर्पकत्वं चास्तीति । तत्र काश्चिद्विषयविषयिविभागेन विषयस्यानित्यत्वाशुचित्वजडत्वदुःखास्पदत्वादिकं तद्व्यतिरेकेण विषयिणश्च नित्यत्वशुद्धत्वज्ञानानन्दस्वरूपत्वादिकं च प्रतिपादयन्ति श्रुतयः । अन्याश्च स्वप्नोपन्यासेन तत्रात्मनः स्वयंज्योतिष्ट्वं ख्यापयन्ति । अपराः पुनः सुषुप्तौ शुद्धात्मानं प्रदर्श्य ब्रह्मात्मैक्यं दृढीकुर्वन्ति । एवं यथाभागं विभज्यावस्थाः परीक्ष-

यन्त्यः श्रुतयः प्रत्येक वीक्ष्यमाणा अस्यामेव प्रक्रियाया महातात्पर्यवत्यो दरीदृश्यन्ते। तत्र निदर्शनार्थं संक्षेपत उदाहरणम्—ईशावास्ये '**अनेजदेकं**' इत्यात्मयाथात्म्यमुपक्रम्य '**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम्**' इत्यवस्थात्रयप्रक्रियासूचनोपसंहारः । केनोपनिषदि च इन्द्रियादिसाक्षित्वेन विविच्यात्मानं सकलविषयत्वस्थापनं कृतम् । काठके च '**स्वप्नान्तं जागरितान्तं च**' इत्यादिना प्रक्रियासूचनम् । '**य एषु सुप्तेषु जागर्ति**', '**इन्द्रियाणां पृथग्भावम्**' इत्यादिना च । मुण्डके च-- '**दिव्योह्यमूर्तः पुरुषः स बाह्याभ्यन्तरोह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥**' इति प्रक्रियासूचनम्। तैत्तिरीयके च पञ्चकोशविमर्शव्याजेन साक्षादवस्थात्रयशोधनम् । ऐतरेयके तु '**त्रय आवसथास्त्रयः स्वप्नाः**' इति विस्पष्टं प्रक्रियोपन्यस्ता । बृहदारण्यकच्छान्दोग्यप्रश्नमाण्डूक्येषु पुनः स्फुटतरमेव जोघुष्यते प्रक्रियेति सकृद्दृष्टिपातोऽवगाहयति। तदेवं द्वैतिवेदान्तिभिरप्यनतिशङ्कनीयप्रामाण्यानां दशोपनिषदां तात्पर्यमस्मदुक्तप्रक्रियया तत्त्वनिर्धारण इति न तिरोहितम्। यत्तु दृश्यते तत्र तत्र प्रक्रियान्तरस्वीकारः तत्सर्वमप्युक्तदिशा जाग्रदाद्यन्यतमावस्थामधिकृत्यैवावान्तरविशेषकल्पनमित्यविरोधः । यथा ह्युपासनलोकान्तरजीवान्तरादिविचारस्फूर्तावप्युनिषत्सु तत्र महातात्पर्यं न कल्प्यते केनचिदेकात्मवादिना। तथा जागरितादिव्यपदेशं विना जागरिताद्यन्यतमान्तर्गतविषयविचारणं प्रासङ्गिकमुपायान्तरं वावस्थात्रयबोधावतारायेत्यवश्यमङ्गीकरणीयम् । यत्सत्यं श्रुतेरुपाये कुत्राप्यभिनिवेशो न युक्तः । सर्वस्याप्युपायस्य मिथ्यात्वात् । उपेय एव तु तात्पर्यमेष्टव्यम्, तस्य प्रतिपिपादयिषितत्वात् । तथापि सर्वेऽप्युपायास्तत्त्वबोधनाय प्रकल्पिता एतत्प्रक्रियाद्वार-

भूताः । प्रत्येक स्वात्मनात्वपर्याप्ता एवावबोधयितु तत्त्वमिति सुधीभि राकलनीयम् ॥

१७५. **सूत्रप्रस्थानगीताप्रस्थानयोर्गतिः** सूत्रप्रस्थानेऽपि '**तदनन्यत्वमारम्भणशब्दादिभ्यः**' इति जाग्रद्दृष्ट्या प्रागुररीकृत-सृष्टि कार्यकारणानन्यत्वन्यायाङ्गीकारेण निरस्य '**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्**' इति स्वप्नमिथ्यात्वं जागरितमिथ्यात्वे दृष्टान्तसिद्ध्यर्थमुपन्यस्य '**तदभावो नाडीष्वात्मनि च**' इति सुषुप्तौ स्वरूपसम्पत्तिमुक्त्वा '**न स्थानतोऽपि**' इत्यादिना जीवस्वरूप-ब्रह्मतत्त्वनिर्णयार्थं प्रववृते भगवान्बादरायण इति स्पष्टमेव । यद्यपि जीवस्य गत्युत्क्रान्त्यादिकमर्चिरादिमार्गं मुक्तानामैश्वर्यादीयत्तामित्या-द्यवस्थाप्रक्रियाबहिर्भूतमप्यधिकृत्य सूत्राणि क्वचित्प्रावर्तन्त । तथापि तत्सर्वमपि जाग्रदवस्थापरिच्छिन्नदृष्टीनां प्रक्रियायां सुखेन प्रवेशार्थ-मिति बोद्धव्यम् । गीतासु यद्यपि नाभिलक्ष्यतेऽत्र दृष्टि, तथापि कर्मयोगज्ञानयोगयोस्तत्त्वनिर्धारणार्थत्वात्तत्र जागरितव्यवहार एव विचारित । अत एव '**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृति ।**' इति साव्यक्तं सर्वं क्षेत्रमेवेत्यभिधाय '**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।**' इति विषयविषयि-विभागः प्रदर्शितः । अतो नास्त्यत्र स्वतन्त्रं प्रस्थानान्तरमिति ध्येयम् ॥

१७६. **इतिहासपुराणादिवचनानि** : एवमितिहासपुराणादि-ष्वपि प्रक्रियैषा दृश्यते विशेषतो विचारिता । तद्यथा महाभारते मोक्षधर्मपर्वणि— '**यदिन्द्रियैस्तूपहितं पुरस्तात्प्राप्तान्गुणान्संस्मरते**

चिराय । तेष्विन्द्रियेषूपरतेषु पश्चात् स बुद्धिरूपः परमः स्वभावः ॥ १ ॥ यथेन्द्रियार्थान् युगपत्समन्तान्नोपेक्षते कृत्स्नमतुल्यकालम् । तथाचलं सञ्चरते स विद्वांस्तस्मात्स एकः परमः शरीरी ॥ २ ॥ रजस्तमःसत्त्वमथो तृतीयं गच्छत्यसौ स्थानगुणान्विरूपान् । तथेन्द्रियाण्याविशते शरीरी हुताशनं वायुरिवेन्धनस्थम् ॥ ३ ॥ इति जाग्रदादीनि स्थानानि परस्परविलक्षणानि गच्छन्नसावात्मा न तद्गुणभोक्तेत्युक्तम् । 'यथा चन्द्रोह्यमावास्यामलिङ्गत्वान्न दृश्यते । न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥' इति विशेषविज्ञानरूपोपाधिलयेऽप्यात्मा सुषुप्ते न शून्यशेष इति च सदृष्टान्तमाह । अध्यात्मरामायणे चोक्तम्— 'जाग्रदादिविनिर्मुक्तं सत्यज्ञानादिलक्षणम् । शुद्धं बुद्धं सदा शान्तमात्मानमवधारयेत् ॥' इति 'दुःखहर्षभयक्रोधलोभमोहमदादयः । अज्ञानलिङ्गान्येतानि कुतः सन्ति चिदात्मनः । सम्प्रसादे द्वयाभावात्सुखमात्रं हि दृश्यते ॥' इति च । ब्राह्मे च—जाग्रत्स्वप्नसुषुप्तैस्तु च्छादितं विश्वतैजसम् । स्वमायया स्वमात्मानं मोहयेद्द्वैतमायया ॥' इति ॥ लैङ्गे च— 'नान्तःप्रज्ञो बहिष्प्रज्ञो न चोभयत एव च । न प्रज्ञानघनस्त्वेवं न प्रज्ञोऽप्रज्ञ एव सः ॥' इति । भागवते च वैष्णवे— 'जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः । मयि तुर्ये स्थिते जह्यात्त्यागस्तद्गुणचेतसाम् ॥ अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम् । विद्वान्निर्विद्यसंसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः । जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा । असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा । गतयो हेतवश्चास्य मृषा स्वप्नदृशो

यथा ॥ **यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् । स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयी त्रिगुणवृत्तिदृगिन्द्रियेशः ॥** इति । तथा सूतसंहितायाम् — '**जाग्रत्स्वप्नसुषुप्त्याख्यावस्थासाक्षिणमव्ययम् । चिद्रूपमात्मना पश्यन्कथं बाध्येत कर्मणा ॥**' इति ॥ '**जाग्रत्स्वप्नाभिधे काले प्रतीतं ग्रसतीश्वरः । स्वात्मनैव सुषुप्तौ तु पुनस्तत्सृजति प्रभुः ॥ यथा स्वप्नप्रपञ्चस्थं समस्तं वस्तुतः स्वयम् । तथा जाग्रत्प्रपञ्चस्थं वस्तुतः स्वयमेव हि ॥**' इति च । एवमेव पुराणान्तरेष्वध्यात्मविचारेऽवस्थात्रयप्रक्रिया समादृता दृश्यते । न च तत्र सुषुप्तौ भावाविद्या नाम काचिच्छक्तिर्विद्यत इति निर्भरेणोक्तम् । तदेवं श्रुतिस्मृतिपुराणेष्वियमेव प्रक्रिया विशेषतो दृश्यते प्रतिपादितेति निश्चीयते ॥

१७६. **आचार्यरचितप्रक्रियाणां परस्परविरोधः** : यत्पुनर्दृश्यते पुराणेष्ववच्छेदप्रतिबिम्बवादादिसवादः । तत्र दृष्टान्तमात्रमद्वैतसम्भावनार्थतयावस्थात्रयवादिनोऽपि नानिष्टम् । न हि क्वचिदाचार्यदेशीयैरारचितप्रक्रियाविशेषेषु तात्पर्यं श्रुत्यादिषु लक्ष्यते । न चैषामाचार्याणां सर्वत्रास्त्यैककण्ठ्यम् । अवस्थात्रयविचारणं त्वद्वैतसिद्धान्तोपयोगीत्यत्र तु नास्ति क्वचिदपि विसंवाद इति विशेषः ॥

अपि चाद्वैतदर्शनयोगे नास्ति क्वचिदपि स्वयूथ्यविवादो विरोधो वा केनचिदिति मतान्तरेभ्यो विशेषो दर्शितः श्रीमद्गौडपादादिभिरभियुक्तैः -- '**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः । अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥**' इति । तद्विपर्ययेण द्वैतदर्शनानुयायिनो परस्परं विरुध्यन्त इति चोक्तम्--

**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् । परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥'** इति तद्विरोधेनेह नवीनवेदान्ताचार्यैरेकजीववादनानाजीववादादिपरस्परविरुद्धप्रक्रियारचनं कृतमस्तीतीदमेव महल्लिङ्गं यद्द्वैतिपरिणता एव तेऽपीति । भवत्प्रक्रियायामयं दोषो भवदीयायामयमिति परस्परं विवदद्भिस्तैरवस्थात्रयप्रक्रियैव केवलं न विवादस्थानीकृतेत्यतः सर्वतन्त्रसिद्धान्तन्यायेनाप्यस्मद्दर्शनं स्थापितं भवति ॥

१७७. **एकजीववादे प्रतिपक्षिभिरुच्यमाना दोषाः :** यथा च तेषामाधुनिकप्रस्थानाना परस्परविरोधेन रागद्वेषक्लेशास्पदत्वं तथा दिङ्मात्रमिह दर्शयिष्याम । अविद्यावच्छिन्नो जीव एक एवेत्येके मन्यन्ते, अविद्या चैकैवेति च । अपरे पुनरनेकजीववादिन. प्रतिजीवमविद्याभेद प्रचक्षते । तथा प्रपञ्चानेकत्वमपीष्यते तैः । तत्रैकजीववादे प्रतिवादिभिरेते दोषाः प्रदर्श्यन्ते– यद्येक एव जीवः कथ वामदेवादयो मुक्ता इति प्रवाद. ? कथं वा **'यो यो देवानां प्रत्यबुध्यत स एव तदभवत्'** इत्यादिका श्रुतिः, **'यावदधिकारमवस्थितिराधिकारिकाणाम् ।'** इति शारीरकसूत्रं च ? किं च वामदेवादीनां स्वाज्ञानविनाशपूर्वकं मुक्तत्वे कथं प्रपञ्चभानम् ? न हि स्वोपादानरजतविनाशेऽपि राजतं द्रव्यं प्रतीतिमश्नुवीतेति। एकमुक्तौ सर्वस्यापि मुक्तत्वात्कोऽन्योवशिष्यते जीवो यं प्रतीदानीं शास्त्रमर्थवद्भवेत् ?

अथ मन्यते– एकमेव शरीरं सजीवमन्यानि तु स्वप्नदृष्टशरीरसदृशानि कल्पितानीति । तर्हीदमवगमयितव्यं कथमेकमपि शरीरं सजीवं न शरीरान्तरतुल्ययोगक्षेममिति । विद्याशास्त्रार्थवत्त्वाय यावदविद्यं तस्याकल्पितत्वमेकस्य जीवत्वं चाभ्युपगम्यत इति चेत्तर्हि

दर्शितश्रुत्याद्यर्थवत्त्वाय जीवान्तरं शरीरान्तरं च तथैव स्वीकुर्वता किमपराद्धमिति ?

यच्च सङ्गिरन्ते केचित्-- हिरण्यगर्भ एवैको ब्रह्मप्रतिबिम्बो जीवः । अन्ये तु मुख्यप्रतिबिम्बभूता इति, तत्सर्वश्रुतिस्मृतिविरुद्धं संविदनुसारिणामनादेयं च। न ह्यस्ति शास्त्रमनुभवो वा कस्यचित् 'अहमस्मि जीवाभासो ब्रह्मप्रतिबिम्ब'' इति । न च हिरण्यगर्भ एवान्यान्स्वप्रतिबिम्बत्वेन कल्पयतीत्यात्रास्ति मानम् । अथ विध्वस्तसकलविकल्पं ब्रह्मैव स्वाविद्यया परिकल्पितांस्तत्तद्विकल्पान् पश्यत्संसरति । ब्रह्माकारान्तःकरणवृत्तिलक्षणया विद्यया स्वत सिद्ध ब्रह्मत्वं ज्ञाप्यते । ततश्च भ्रमनिवृत्तिरिति सर्वेऽपि व्यवहारा स्वप्नवदुपपद्यन्त इति । तच्च न । यथा हि हेत्वभावेऽपि ब्रह्म स्वस्मिन् बन्धं शास्त्र गुरुं मोक्ष चाचीक्लृपत् । तथा भूयो भूयः कल्पयिष्यति चेत्कः प्रतिरुन्ध्यात् ? विद्याविद्याव्यवहारश्च स्वप्नवच्चेत्स्वप्नात्पूर्वं नाविद्याहेतुरस्ति, ततश्च बन्धाभावः । अथानादि' सा । ततस्तस्यापि स्वप्नव्यवहारसमानयोगक्षेमत्वादविद्यया स्वप्नवद्व्यवहार इति वाचोयुक्तिरनर्थिका ॥

यदपि केचिदाहुः-- अविद्या नानाशा । तत्तदंशोपहितजीवभेदोऽप्यङ्गीक्रियते चेति । तदपि न । नानांशमङ्गीकुर्वतः कः प्रयासोऽविद्याया नानात्वाभ्युपगमे ? लाघवादेवमिति चेत् । न, मानाभावेऽप्यंशवत्त्वाभ्युपगमे लाघवाभावादिति ॥

**१७९. नानाजीववादे तत्प्रतिपक्षिभिरारोप्यमाणा दोषा :**

नानाजीववादे चैवमेव प्रतिवादिभिर्दोषा आविष्क्रियन्ते । प्रपञ्चस्याविद्याकृतत्वादविद्यायाश्च जीवाश्रयत्वाभ्युपगमात्, तस्याश्चाविद्या-

या नानात्वात्प्रतिजीव भिन्नः स्यात् प्रपञ्च । न चेष्टापत्ति. । न्यायाभावात्प्रतीतिविरोधाच्च । कीदृशो हि स्यात्प्रपञ्च प्रपञ्चान्तराव्यतिरिक्त एकजीवकल्पितात्? न हि कश्चिज्जीवो मत्प्रपञ्च एतावानिति कल्पयतीति शक्यं वदितुम् । किंचैकजीवकल्पितप्रपञ्चकुक्षावनिक्षिप्तो जीव एव न सम्भाव्यते, यः कल्पयिता भवन् भवेत्प्रपञ्चान्तरस्य । अनेन सर्वजीवाविद्यात प्रपञ्च एक एव भवति तन्त्वनेककृतपटवदित्यादि निरस्तम् । सर्वेषामपि जीवानां प्रपञ्चान्तर्भावात् । अन्यथा अनेककर्तृभोक्तृसयुक्तजगतो ब्रह्मण सकाशाज्जन्मेति वदद्भिरभियुक्तै· श्रुतिस्मृतिवादैश्च विरोधप्रसङ्गात् । अपि च जीवनानात्वे प्रपञ्चनानात्वे च कल्प्यमानेऽनेकेश्वरवादोऽभ्युपगत· स्यान्निष्प्रमाणक· । अपि च जीवानेकत्वेऽपि किमर्थः प्रपञ्चानेकत्ववादः? भ्रान्तिसिद्धजगत एकरूपत्वासम्भवादिति चेत् । भ्रान्तिसिद्धजीवान्तराणामपि तथैवेत्यल मुधा कल्पनेन ॥

अथ मति — परमेश्वरमायाविनिर्मित एव प्रपञ्च· । जीवैस्तु प्रातिस्विकया विद्यया विध्वस्यमानो बन्धो भूतभौतिकप्रपञ्चव्यतिरिक्त एवेति । तर्हि भूतभौतिकप्रपञ्चो मुक्तस्यापि प्रतीयेत । न च शङ्कनीयं विद्यमानोऽपि मुक्तं प्रति न भाति प्रविलीननिखिलकरणत्वादन्धं प्रतीव रूपादिरिति । तस्य मुक्तावपि विद्यमानत्वे सत्यत्वापातात् । अथेश्वरमायानिर्मितत्वादेव मिथ्या सोऽपि । तर्हि तादृशमायावैशिष्ट्ये स्वातन्त्र्यं चेन्नैर्घृण्यमस्वातन्त्र्यं चेज्जीवत्वापत्त्यानीश्वरत्वप्रसङ्गः । न चास्तीश्वरशासनं कर्तृत्वादिबन्ध एव जीवाविद्यया कल्पयितव्यो न पुनर्भौतिकप्रपञ्चतदीश्वरसद्भावादिरपीति । तस्मादसाध्वीयं कल्पनेति ॥

१८०. **प्रतिबिम्बवाद्यवच्छेदवादिनोः कलहः** : एवमेव प्रतिबिम्बवादावच्छिन्नवादयोः परस्परं विवादः । तत्र घटाकाशवदुपाध्यवच्छिन्नो जीव इति केचित् । एतत्पक्षं प्रतिषेधन्त्यपरे प्रतिबिम्बवादिनः । दोषं च दर्शयन्ति वादे । कथम्? अण्डान्तर्वर्तिब्रह्मणः सर्वात्मना जीवभावेनावच्छिन्नत्वादनवच्छिन्नस्य ब्रह्मणोऽण्डाद्बहिरेव सद्भावप्रसङ्गः । तत्र सर्वगतसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्, अवच्छिन्नप्रदेशेष्वनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात् । स्वरूपापेक्षया तत्सर्वं न बहिःस्थितब्रह्मापेक्षयेति चेत्, न । '**यो विज्ञाने तिष्ठन्**' इत्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणो जीवसन्निधानेन विकारान्तरावस्थानश्रवणात् । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्रैव द्विगुणीकृत्य वृत्त्युपपत्तेर्जीवावच्छेदेषु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानमुपपद्यत इति प्रतिबिम्बपक्ष एव श्रेयानिति ॥

१८१. **प्रतिबिम्बवादे दोषा** : प्रतिबिम्बवादविरोधिनस्तु वदन्ति– यद्यपि बिम्बात्प्रतिबिम्बस्य वस्त्वन्तरत्वं नाङ्गीकार्यम्, तथापि तदेव तदिति दुराग्रहः । '**आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः, न स एव साक्षात्**' इति भाष्यात् । '**आभासस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिः**' इति च । यत्तु '**नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थम्**' इति शास्त्रात्पारमार्थिकमेव बिम्बैकरूपत्वमिति । तन्न । अर्थान्तरनिष्ठस्य वाक्यस्यार्थान्तरे तात्पर्याभावात् । प्रकृतवाक्यस्य हि निषेधे तात्पर्यम्, न तु निषेधस्य वस्तुत्वेऽपीति ॥

यच्च– मिथ्यारजतस्य सत्यरजतैकरूपावभासित्वेऽपि बाधदर्शनान्मिथ्यात्वमिष्यते न तथेह बाधोऽस्तीति । तत्र यदि बाधो नामादर्शनम्, तर्हि दार्ष्टान्तिकेऽपि जीवब्रह्मणोर्ब्रह्मैकत्वावगमेऽपि भेदप्रतिभासप्रसङ्गः । न च तत्त्वमसीति न बाधः, बाधे हि सति 'न तत्त्वमसि' इति भवेदिति वाच्यम् । जीवत्वस्याबाधे वेदान्तप्रामाण्यस्यैवापायप्रसङ्गात् ॥

यदपि – दर्पणदृष्टान्ते न सर्वोऽपि विवक्षितः, किं तर्हि यथैकमेकदेशस्थमेव मुखं भ्रमाद्भिन्नं भिन्नदेशस्थं वावभासते तथा ब्रह्मण्यनेकत्वं विच्छेदावभासश्चेत्येतावानंश इति । तदपि न, उक्तरीत्या बिम्बैक्यावगमेऽपि विच्छेदावभासस्यानिवृत्तिवद्दार्ष्टान्तिकेऽपि मिथ्यावभासानिवृत्तिप्रसङ्गात् । यद्युच्येत-- दृष्टान्तेऽनिवृत्तिर्न प्रतिबिम्बकृता किं तूपाधेरज्ञानाजन्यत्वकृतेति । दर्पणप्रतिबिम्बो नैव जीवस्य प्रतिबिम्बतासम्पादनायालं भवेत् दृष्टान्तः । अज्ञानकृतोपाध्यवच्छिन्नश्च नास्ति दृष्टान्तः ॥

किं च जीवः प्रतिबिम्बश्चेत् स्वस्य बिम्बात्मतामवगन्तुं नैव समर्थः स्याद्दृष्टान्तगतप्रतिबिम्बवत् । न चेदमचेतनत्वकृतं न प्रतिबिम्बत्वकृतमिति युक्तम् । प्रतिबिम्बस्य चेतनत्वस्य कुत्राप्यदृष्टत्वात् । **'रूपं रूपं प्रतिरूपो बभूव'** इत्यादिशास्त्रबलात्प्रतिबिम्बभूतस्यापि चेतनत्वमिति चेत् । न । शास्त्रस्य वस्तुनि सामर्थ्याधाने व्यापाराभावात् । बोधलक्षणं हि प्रामाण्यं न कारकलक्षणमङ्गीक्रियते ॥

न चामूर्तस्य ब्रह्मणः प्रतिबिम्बो भवितुमर्हति जीवः । नन्वमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवद्ब्रह्मणोऽपि सम्भवेत् । न, स्वयमाकाशस्य नीरूपस्य प्रतिबिम्बादर्शनात् । चाक्षुष-

प्रत्यक्षे च रूपस्यापेक्षितत्वात् । येषां तु नैल्याभ्रप्रमुखानां प्रतिबिम्ब॰, तत्र विद्यत एव रूपमित्यदृष्टान्त । यत्वत्राह कश्चित्– नीरूपस्यापि रूपस्य प्रतिबिम्बवद्ब्रह्मणोऽपि स्यादिति । स तु रूपस्यैव प्रतिबिम्बो रूपवत इति व्यवह्रियत इति प्रतिबोधनीय । न ह्यत्रापि रूपस्येव ब्रह्मणोऽपि पदार्थान्तरपारतन्त्र्यमभ्युपगम्यते । तदेवं ब्रह्मणो नीरूपत्वात्प्रतिबिम्बासम्भव । वस्त्वन्तरेण विप्रकर्षानुपपत्तेश्च तथेत्यवगन्तव्यम् ॥

एवं च प्रतिबिम्बासम्भवात्, सम्भवेऽप्यचेतनत्वापातात् तस्याप्यैक्यज्ञानेन बाधानभ्युपगमात्, तथाऽभ्युपगमे वा मुक्त्यवस्थाया बद्धस्याभावप्रसङ्गात्, प्रतिबिम्बस्य संसर्गमात्रेण कल्पितत्त्वाङ्गीकारेऽपि नास्ति दर्पणेऽन्यत् मुखमित्यसंसर्गविज्ञानानन्तरं बाधादर्शनाद्दृष्टान्तत्त्वापगमाच्च मलीमस एव प्रतिबिम्बपक्ष इति केचित् । एवं वेदान्तराण्यपि परस्परविप्रतिषिद्धानि परिकल्पितान्यद्वैतवादिभि॰ । अवस्थात्रयप्रक्रिया तु सर्ववाद्यभिमतेत्यस्ति विशेष॰ ॥

१८२ **वार्तिककारवचनतात्पर्यम्ः** अत्राह– किमर्थं तर्हि वार्तिककारवचनम् **'यया यया भवेत्पुंसाम्'** इत्यादि? अत्र हि सर्वापि प्रक्रिया साध्वीत्युच्यते । अत्र ब्रूम॰– जगदुत्पत्तिप्रतिपादकविधाभेदान् प्रकृत्येदमुच्यते, न तु वेदान्तप्रक्रिया या काचिदपि साध्वीति । अयं ह्यत्राशयः– सृष्टिक्रमे नास्त्यादरो वेदान्तानाम् । यया सृष्टिप्रक्रियया प्रत्यगात्मज्ञानमुदयमासादयति पुंसां सा सर्वाप्यङ्गीकरणीयैव । अत एव नानाविधा सृष्टि॰ पठ्यते श्रुत्यन्तरेष्विति । तथा च न्यायः– **'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः'** इति । भाष्यं च– **'भवेदपि कार्यस्य विगीतत्त्वम्, अप्रतिपाद्य-**

**त्वात् । न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः । न हि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा । न च कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यतया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्'** इत्यादि । समनन्तरवार्तिकेनाप्येतदेव हि स्पष्टीकरिष्यते -- **'उद्भूतिस्थितिहानीनां न क्वचित्सम्भवो यथा । मुख्यां वृत्तिं समाश्रित्य तथोदर्केऽपि वक्ष्यते ॥'** इति । तस्मान्न वार्तिकव्याजेन विरुद्धप्रक्रियाणामभ्यनुज्ञानमाशङ्कितव्यम् । यया प्रक्रियया बुभुत्सोर्ज्ञानजनि. सैवादर्तव्येति खलु वदत्याचार्य । अवस्थात्रितयपरिशीलन च तादृश्यसाधारणी प्रक्रियेत्युपपादितम् । अत एव ह्यव्याकृतनिरूपणेऽप्यवस्थात्रयपरीक्षणमाचार्यस्येति ॥

तदेवं सर्वेषामपि वेदान्तानामत्रैव तात्पर्यदर्शनात्, सूत्रभाष्यवार्तिककाराणा चाविसंवादात्, पुराणेतिहासादिषु प्रशंसितत्वात्, सिद्धान्त्येकदेशीयानां मतान्तरसिद्धान्तसमभ्यासजनितव्यामोहसम्भवात्, तेषां मिथो विप्रतिषेधदर्शनाच्च नास्मिन् दर्शनेऽनाश्वासः कार्यः । विस्रब्ध विनिश्चीयतामियमेव प्रक्रिया त्रय्यन्तनिष्णातानां प्रियतमेति ॥

## शास्त्रानर्थक्यादिदोषपरिहारः

**१८३. शङ्कावादिना प्रक्रियायां दोषकथनम् :** नन्वेवमपि भवत्पक्षे शास्त्रोपदेशानर्थक्यादयो दोषा लक्ष्यन्ते । तथा हि -- विनाप्युपदेशं सर्वजन्तुभिर्लभ्यत्वात्सुषुप्तावविद्याविगमस्य, किं प्रयोजनं पुनर्वेदान्तश्रवणम् ? अथ सुषुप्तौ विगमेऽपि भवति जागरिते पुन-

स्तत्सम्बन्धस्तत्परिहारार्थं च शास्त्रश्रवणमिति कल्प्यते। एवमपि को विस्रम्भ पुनरपि वाक्यश्रवणेन बाधिता सती साविद्या नाविशति श्रोतारमिति । स्वतो निवृत्ता हि सा सुषुप्त्यनन्तरं जागरिते दरी-दृश्यते। तथा श्रवणानन्तरं बाधितायाः पुनरागमने पुनस्तत्परिहारार्थं श्रवण चेत् कुञ्जरशोचानुकरणं प्राप्नुयात् ॥

किञ्चान्यत् – सुषुप्ताज्ञानवादिनां मते तावद्वेदान्तेषु सुषुप्त्युपन्यास' सार्थक' । तेन हि विक्षेपतिरस्कारेणानर्थनिवृत्तिरविद्यानिवृत्तेः प्रयोजनभूतसत्सम्पत्तिसूचनम्, निश्शेषमविद्याविलयाभावात्तन्निमित्तेन जागरितायोत्थानम्, निश्शेषोपघाताय च विद्योपदेश इत्येतत्सर्व-मुपपादितं भवति । तव तु नास्ति किमपि सुषुप्त्युपन्यासेन श्रुत्यन्त-विहितेन सम्भाव्यमान प्रयोजनम् ॥

अपि च सुषुप्तिश्चेन्निरविद्या तर्हि सुषुप्तिस्वरूपानिर्धारणरूपोऽपि दोष प्रादु ष्यात् । ततश्चावस्थात्रयव्यवहारविलोप । न हि सुषु-प्तावविद्या मुक्त्वाऽवस्थात्वे किञ्चिदुपाध्यन्तरं शक्यसम्भावनम्। अत एव गुरुज्ञानवासिष्ठे प्रोक्तम् -- '**सुप्तावखण्डैकरसं निरञ्जनं ब्रह्मैव यान्तीत्यखिलाः प्रजा इमाः। वदन्ति ये तन्मतमेव कुत्सितं जीव-त्रयोक्तेरवकाशहानितः ॥ तैजसाख्यो यदा जीवः शेते नाड्यां पुरीतति। तदा प्राज्ञाख्यजीवत्वं याति न ब्रह्मतां ध्रुवम् ॥**' इति। श्रुतिसम्मतं चैतत् सुषुप्तावस्थातत्स्थात्मनोः पृथक्करणम् । '**प्राज्ञस्तृ-तीयः पादः**' इत्यादिदर्शनात् । तदेतत्सुषुप्तेरवस्थान्तरत्वं तद्गतस्य चात्मानस्तुरीयव्यतिरिक्तप्राज्ञत्व च श्रुतिसम्प्रदायोभयसिद्धं लवणा-म्बुधावेव निधीयेत निरविद्या चेन्निद्रावस्था स्वीक्रियेत। तदेवं शास्त्रो-पदेशानर्थक्यादिदोषगणो दुष्परिहरः प्रतिभात्यस्मिन् पक्ष इति चेत् ॥

**१८४. शास्त्रानर्थक्यादिदोषपरिहार.** : मैवम् । अनुक्तोपालम्भनात् । न हि वय नित्यसिद्धामविद्यामात्मन्यङ्गीकुर्महे, येन तन्निवृत्तिपुनरावर्तनादिचिन्ता स्यादर्थवती । कथ तर्हि सुषुप्तावविद्या नास्ति जागरितस्वप्नयोस्तु विद्यत इति वाचो युक्ति ? उच्यते । **'आदित्यवर्ण तमसः परस्तात्'**, **'तमसः परमुच्यते'** इत्यादिश्रुतिस्मृतिभ्यो तत्त्वतोऽविद्यासंस्पर्शविधुर एव सन्नात्मा जागरितस्वप्नयोरविद्यावानिव लक्ष्यते उपाधिजनितभ्रान्तिसम्मूढचेतोभि । सुषुप्तौ तु सकलोपाधि शान्तौ स्वेनैव रूपेण भासत इत्यविद्यासंसर्गो नास्तीत्युच्यते । ननु तर्हि किमर्थ वेदान्तश्रवणम् ? नित्यनिवृत्ताविद्यस्य पुनरप्यविद्यानिवृत्त्यर्थ श्रवणमिति कथ शोभते ? यद्येव निवृत्ताविद्यमात्मान प्रतिपन्नोऽसि नास्ति श्रवणेनार्थ । एववेदनार्थत्वादेव श्रवणस्य ॥

एतेन सुषुप्तौ स्वरसत एव विगमादविद्यानिवृत्त्यर्थ श्रवणं नोपपद्यत इत्याद्याक्षेप. कृतपरिहारो भवति । न हि वय वास्तविकवृत्तेन काञ्चिदविद्यानिवृत्ति सुषुप्तिप्राप्तिमात्रेण वा मुक्तिं प्रतिजानीमहे येनायमुपालम्भः शोभेत । निरविद्यात्मप्रतिबोधेनैव हि शास्त्रजनितेन मोक्ष इत्यभ्युपगम्यते, तत्र कुतः शास्त्रानर्थक्यशङ्केति । यच्चोक्तं को विस्रम्भः पुनरपि वाक्यश्रवणेन बाधिता सती नाविशति श्रोतारमिति । न तच्चोद्यमवतरति । ज्ञाते ह्यात्मनो निरविद्यत्वे भूयोऽपि तत्संसर्गाद्यारोपणं न शक्यशङ्कम्, निरूपितशुक्त्यादौ रजताद्यध्यारोपस्यादृष्टत्वात् ॥

**१८५. उपनिषत्सु सुषुप्त्युपन्यासप्रयोजनम्** : यत्पुनरुक्तं सुषुप्ताज्ञानवादिनां मते श्रुतिषु सुषुप्त्युपन्यासः सार्थकः, सिद्धान्ते तु

नैवमिति । तदसत् । तेषा पक्षे सर्वेषामपि दोषाणामस्मत्प्रक्रियासञ्चारित्वेन चोदितानां सत्त्वात् । तथा हि– यदि तावज्जागरितस्वप्नयोरलब्धपदां सत्सम्पत्तिं सुषुप्तौ शास्ति शास्त्रमिति स्वीक्रियेत । तत सुषुप्तिदृष्टान्तेन मुक्तिरप्यनित्या भवेत् । सत्सम्पत्तिसाम्यात् । ननु सुषुप्तौ विक्षेपमात्रं तिरस्क्रियते मुक्तौ तु न तथेति स्याद्वैलक्षण्यम्? न तर्हि समस्ति सत्सम्पत्ति सुषुप्ते, अविद्यया व्यवहितत्वाज्जीवस्य । अपि च जीवन्मुक्तानामपि जागरिते प्रपञ्चनिर्भासोऽस्ति । तत्र यदि विक्षेपविलय एवापेक्षितः सत्सम्पत्तौ । तर्हि वरं प्राकृतजनस्य सुषुप्तिप्राप्तिर्न तु जीवन्मुक्तिरिति ज्ञानवैयर्थ्य स्यात् । किञ्चान्यत्– अविद्याचित्सम्बन्धो वास्तविक एव स्यादस्मिन् पक्षे, अवस्थात्रयेऽपि विद्यमानस्य तस्य मिथ्यात्वोपपादकहेत्वभावात् । ततश्च शास्त्रानर्थक्य सुस्थितम् । न हि शास्त्रमविद्यमानस्य मोक्षस्य कारकं विद्यमानस्य चिदविद्यासम्बन्धस्य निवारक वा भवेदिति । तस्माच्छास्त्रानर्थक्यादिदोषाणां दुष्परिहरत्वादस्मिन् पक्षे सुषुप्त्युपन्यासस्य न किञ्चिद्विद्यते प्रयोजनम् । अस्मत्पक्षे तु विद्यमान एवाविद्याराहित्यं सुषुप्त्युपन्यासद्वारा शास्त्रेण ज्ञाप्यत इति महद्वैलक्षण्यमस्तीति ॥

१८६. **सुषुप्तेरवस्थात्वोपपत्तिः :** यदप्युक्तं सुषुप्तेरवस्थात्वमेव न सिध्यति सा चेन्निरविद्या स्वीक्रियते । ततश्चावस्थात्रयव्यवहारविलोपप्रसङ्ग इति । तदपि न सम्यक् । सिद्धमेव ह्यस्मत्पक्षेऽपि सुषुप्तेरवस्थात्वं व्यावहारिकम् । यथा हि जागरितावस्था व्यावहारिक्येव कल्प्यते स्वप्नश्च, तथा सुषुप्तिरपि[1] जाग्रद्दृष्टिप्रधानैः परि-

१ यस्मिन्सुषुप्त्यवस्थेयं भातीव भवतीव च ।
तत्तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ॥ —सू० य०

कल्पित आत्मन्यङ्गीक्रियत एव यावद्व्यवहारम्। जाग्रत्प्रतिबद्धदृष्टयो हि प्रतिपत्तार एवं मन्यन्ते-- अवस्था नाम कालिको विशेष. सर्वैरप्यस्माभि रनुभूयमानः। अस्मिन् हि जगति विद्यमाना जीवाः सर्वेऽपि स्व-कर्मानुगुणं तत्र तत्रोपस्थितान् सुखदु.खभोगानुपभुञ्जाना जाग्रदवस्था-यामिन्द्रियैर्बाह्यैर्विषयोपलब्धिरूपं भोगमनुभवन्ति । स्वप्नावस्थाया केवलं तद्वासनानिर्मितान् विषयानन्तःकरणेन मनसैवानुभवन्ति । सुषुप्ते पुनरुभयरूपेऽपि करणग्राम उपरते सति विश्रान्तिसुखं स्वस्था अनुभवन्तीति । तदेतत्करणोपसंहारेण सन्मात्ररूपेणावस्थानं सुषुप्ति-रिति व्यावहारिकदृष्ट्या प्रसिद्ध न क्वचिदपि निषिद्धमस्माभिः ॥

यदा पुन परमार्थदृष्ट्या निरूप्यते तदा व्यपगच्छति सुषुप्तेः सुषुप्तित्वं यथा जागरितस्वप्नयोरपि तत्त्वम्[1]। न हि कालो नाम कश्चि-त्स्वतन्त्रः पदार्थः सिध्यति जाग्रदाद्यवस्थानवच्छिन्नः । जाग्रत्स्व-प्नयोः सममेव हि तत्तदवस्थाप्रतिबद्धकालदेशनिमित्तानां तत्तत्का-लादिप्रतिनियतक्रियाकारकफलानां चोपलब्धिः। सुषुप्तौ पुनः कालादेः कस्यचिदपि नोपलब्धिरस्तीति कुत एव सुषुप्तिः कालिको विशेषः स्यात्? एव जाग्रत्स्वप्नयोश्च साधारणः कश्चिदप्येकः कालो न विद्यत इति न तावपि कालिकौ विशेषाविति युज्यते परमार्थतः । तस्मा-दत्यल्पमिदमुच्यते सुषुप्तेरवस्थात्वं न स्यादिति । मिथ्याज्ञानमात्रं हि हेतुरवस्थात्रयाभिमाने ॥

१८७. उपसंहारः : वस्तुतस्तु भाविकमेकमेवात्मतत्त्वं तुरी-याभिख्यम्। तस्य तुरीयत्वाभिधानं च न जागरितादीनां सत्त्यत्व-मपेक्ष्य । कथं तर्हि? तदन्यावस्थानां काल्पनिकसत्त्वमपेक्ष्य ।

१. नास्य स्वापः प्रबोधो वा कुत स्वप्नस्य संभवः ।
प्रत्यक्स्वभाव एवास्य जाग्रत्स्वप्नसुषुप्तय. ॥ —वा०

एतेन तुरीयातीतत्वमपि व्याख्यातम् । तथा च स्मृतिः -- '**यस्मिन् क्लृप्तं तुरीयत्वं त्रिधामापेक्षयैव तु । तं तुरीयत्वनिर्मुक्तं वन्दे चिद्घनमीश्वरम्॥**' इति '**यस्मिंस्तुरीयातीतत्वमध्यस्तं तदभावतः । तं वन्दे केवलं शुद्धं निर्विशेषं महेश्वरम् ॥**' (सू० य०) इति च । अत एव विश्वादयोऽन्योन्यस्मिन् न सन्तीति प्रतिषिध्यन्ते, तुर्ये च त्रयोऽपि प्रतिषिध्यन्ते । न तु तुर्यस्य तथा क्वचन प्रतिषेधो दृश्यते वेदान्तेषु । तत्सिद्धमवस्थात्रितयं महाकल्लोलत्रितयमिव तुर्याख्ये शान्तसागरे विकल्पितमिति ॥

एतेन 'प्राज्ञस्तृतीय· पाद·' इत्यपि व्याख्यात भवति । तस्य काल्पनिकविषयत्वात् । तथा च भाष्यकाराः '**तामबीजावस्थां तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसम्बन्धरहितां पारमार्थिकीं पृथग्वक्ष्यति**' इति । यत्तूदाहृतं वाक्यम् 'सुप्तावखण्डैकरसम्' इत्यादि, तदनाप्तप्रणीतत्वाच्छ्रुतिस्मृतिन्यायविरोधाच्चोपेक्ष्यम् । तस्मान्नास्ति शास्त्रानर्थक्यादिदोषः कश्चिदपि । स्वदृष्टिदोषेण तु सर्वत्र दोषमुद्भावयन्त्यविद्यापिनद्धाक्षा इत्यलं बहुविस्तरेण ॥

**एकं व्योम्नि विराजमानमपि तामिस्रात् परस्तात् सदा**
**भास्वन्तं कुदृशस्तमोऽभिभवतो ग्रस्तं विदुश्छायया ।**
**सुप्तौ तद्वदपास्तसर्वमलमप्याभान्तमेव स्वयं**
**दृष्ट्वा संवृतिमाहुरात्मनि कथं मायाविमोहं विना ॥**

इति श्रीमत्पूज्यपादशङ्करभगवच्चरणस्मरणपरिचयाप्तवेदान्तप्रवेशेन
**सुब्रह्मण्येन विरचिते**
श्रीमति शङ्करहृदये मूलाविद्यानिरासे
श्रुत्यादिप्रमाणोपन्यासो नाम
चतुर्थ· खण्ड

—*—

# शुद्धिपत्रम्

(दर्शनमात्रादेव सुबोधानामशुद्धीनां नात्र समावेश· कृत·)

| पृष्ठे | पङ्क्तौ | पठितव्यम् |
|---|---|---|
| 1 | 12 | विविश्चन्ति |
| 3 | 23 | अवस्थात्रयपरीक्षणमेव |
| 7 | 12 | स्यात् |
| 8 | 18 | सिद्धान्तितम् |
| 11 | 1 | पूर्वमीमासाया |
| 16 | 19 | (पवित्र)तमानामपि |
| ,, | 23 | तद्विषयस्य |
| 21 | 3 | जीवन्मुक्तेर्गौणत्वस्वीकारेऽपि |
| ,, | 4 | नाविद्याया |
| ,, | 13 | एकाधिकरणत्वायोगात् |
| 24 | 3 | केन |
| ,, | 12 | छायाया |
| 25 | 5 | (सम्)दाचरद्वृत्तिकत्वाभावाच्च |
| ,, | 9 | न त्वनुभूतद्वैतथ्य |
| 27 | 21 | आवरणात्मकत्वादविद्या |
| 28 | 12 | प्रमाणज्ञानविषयत्वमस्ति |
| 29 | 9 | व्यवहारः |
| 33 | 13 | ज्ञाततयाज्ञाततया |
| 34 | 8 | स्वशिरश्छिन्नं |
| 35 | 17 | सम्प्रतिपत्त्यभावात् |
| 39 | 1 | तृप्तिरुदीया |
| ,, | 2 | बुद्ध्यैव |

| पृ० | प० | पठि० |
|---|---|---|
| 39 | 4 | प्रवृत्तिवैफल्यं |
| 48 | 1 | कारणसङ्घातरूप |
| 49 | 6 | प्रातिभासिकसत्त्वं |
| 51 | 19 | दृष्टान्ते नैव कस्यचिदप्यनादित्वम् |
| 61 | 19 | अन्त करणादीनि |
| 65 | 18 | ज्ञानापनोद्यत्वं |
| 76 | 11 | ऽनुभूयते |
| 77 | 3 | स्यात्प्रतिबन्ध· |
| 80 | 18 | विक्रियैषा |
| ,, | 23 | इति । |
| 87 | 1 | व्यापारेऽपरस्य |
| ,, | 12 | अतिरिक्तत्वमापातत |
| 95 | 19 | सत्यासत्यविभागो |
| ,, | 20 | तद्वति ॥ वा० |
| 103 | 20 | (सह)त्वादेव |
| 104 | 2 | अनिर्वाहात् तदा– |
| 118 | 4 | अव्यभिचरितस्वरूपत्त्व |
| 128 | 20 | ज्ञातृत्वोपपत्ति |
| 133 | 14 | कल्पिता इति |
| 138 | 10 | स्वातन्त्र्याभावात् |
| 152 | 6 | १२८ |
| ,, | ,, | अविद्याविशेषोपादानकत्वं |
| 162 | 23 | संसारनाशो . . . .नाशान्न व्यतिरिच्यते । |
| 164 | 8 | वृत्त्यभाव |
| 166 | 11 | निवृत्तेरनात्ममिथ्यात्वनिश्चय० |
| 168 | 15 | न तु तद्द्वितीयमस्ति |
| ,, | 16 | तम श्वभ्रनिभम् |
| ,, | 17 | विभक्तमिव च स्थितम् |

| पृ० | प० | पठि० |
| --- | --- | --- |
| 174 | 13 | स्वस्मिन्नपीतस्तर्हि |
| 176 | 16 | वैयर्थ्यापातात् |
| ,, | 19 | नात्यन्तिकी |
| 179 | 3 | प्रस्तुत॰ |
| 182 | 7 | स्वाप्ययवदुपपत्ते |
| 183 | 4 | सवेत्ति |
| ,, | 16 | सर्वप्राणभृत्॰ |
| ,, | 20 | आशरीरपातमस्त्येव |
| 188 | 22 | प्रमाणाभावात् |
| 189 | 4 | सूत्रकारादि॰ |
| ,, | 12 | बीजाङ्कर॰ |
| 199॰ | 5 | विपरीताभिधायीनि |
| ,, | 12 | मत्तमातङ्गा॰ |
| ,, | 14 | उदक्रामन् |
| 215 | 13 | निर्णेतुं श्रुत्यनुक्तं |
| 222 | 4 | चिद्रूपमात्मना |
| 226 | 12 | नियन्तृत्वादि॰ |
| 228 | 13 | वादान्तराण्यपि |

—*—

# पोषणद्रव्यप्रदातॄणां नामानि

| | | |
|---|---|---|
| ब्रह्मश्री | विठ्ठलशास्त्रिण· वेदान्तशिरोमणय | यल्लंबळसी |
| ,, | कृष्णशास्त्रिण | ,, |
| ,, | लक्ष्मीनारायणशास्त्रिण | ,, |
| ,, | पौराणिकनरसिंहभट्टा | ,, |
| ,, | ,, रंगभट्टा· | ,, |
| ,, | सुब्बरायभट्टा | सखरायपत्तनम् |
| ,, | सीतारामशास्त्रिण (वैकुण्ठवासिन) | दोड्डहेब्बाजी |
| ,, | लक्ष्मणशास्त्रिण | यगटी |
| श्रीमान् | दुम्मेनहळ्ळि चलुवय्यशर्मा | अरसीकेरे |
| ,, | ,, नंजप्पशर्मा | ,, |
| ,, | श्रीरामभक्त (अस्य महाशयस्य निदेशानुरोधेन नामोल्लेखो न कृत) | ,, |
| श्रीमन्त | श्रीरामसेवासङ्घसभासद | तरीकेरे |
| श्रीमान् | सीतारामय्यशर्मा | होळलुकेरे |
| ,, · | शामण्णशर्मा | ,, |
| ,, | हिरियण्णशर्मा | मेटीकुरके |
| ,, | अळहिय सिंगराचार्यशर्मा | सखरायपत्तनम |
| ,, | बि. के अश्वत्थय्यशर्मा | ,, |
| ,, | घण्टा श्रीनिवासरायशर्मा | ,, |
| ,, | मल्लेश्वरय्यशर्मा | ,, |
| ,, | नाडिग केशवमूर्तिशर्मा | ,, |
| ,, | मैलारय्यशर्मा | ,, |
| ,, | यरदकेरे वेङ्कटरामय्यशर्मा | यल्लंबलसी |
| ,, | श्यामय्यशर्मा | ,, |
| ,, | मैलारय्यशर्मा | बीरूरु |
| ,, | रामस्वामय्यशर्मा | शिवमोग्गा |
| ,, | वेङ्कटकृष्णप्पशर्मा | यगटी |
| ,, | सीतारामय्यशर्मा | मायसद्रम् |

———